परमाणौ, निधायेति शेषः, कः ?–'छद्मस्थः' प्राग्निरूपितशब्दार्थः, 'ध्यायति' चिन्तयति 'सुनिष्प्रकम्पः' अतीव निश्चल इत्यर्थः, 'ध्यानं' शुक्लं, ततोऽपि प्रयत्नविशेषान्मनोऽपनीय 'अमनाः' अविद्यमानान्तःकरणः 'जिनो भवति' अर्हन् भवति, चरमयोर्द्वयोर्ध्यातेति वाक्यशेषः, तत्राप्याद्यस्यान्तर्मुहूर्तेन शैलेशीमप्राप्तः, तस्यां च द्वितीयस्येति गाथार्थः ॥ ७० ॥ आह–कथं पुनश्छद्मस्थस्त्रिभुवनविषयं मनः संक्षिप्याणौ धारयति ?, केवली वा ततोऽप्यपनयतीति ?, अत्रोच्यते—

जह सव्वसरीरगय मंतेण विस निरुंभए डंके । तत्तो पुणोऽवणिज्जइ पहाणयरमंतजोगेणं ॥ ७१ ॥

व्याख्या—'यथे' त्युदाहरणोपन्यासार्थः, 'सर्वशरीरगतं' सर्वदेहव्यापकं 'मन्त्रेण' विशिष्टवर्णानुपूर्वीलक्षणेन 'विषं' मारणात्मकं द्रव्यं 'निरुध्यते' निश्चयेन ध्रियते, क ?–'डङ्के' भक्षणदेशे, 'ततः' डङ्कात्पुनरपनीयते, केनेत्यत आह–'प्रधानतरमन्त्रयोगेन' श्रेष्ठतरमन्त्रयोगेनेत्यर्थः, मन्त्रयोगाभ्यामिति च पाठान्तरं वा, अत्र पुनर्योगशब्देनागदः परिगृह्यते इति गाथार्थः ॥ ७१ ॥ एष दृष्टान्तः, अयमर्थोपनयः—

तह तिहुयणतणुविसय मणोविस जोगमंतबलजुत्तो । परमाणुंमि निरुंभइ अवणेइ तओवि जिणवेज्जो ॥ ७२ ॥

व्याख्या—तथा 'त्रिभुवनतनुविषयं' त्रिभुवनशरीरालम्बनमित्यर्थः, मन एव भवमरणनिबन्धनत्वाद्विषं मन्त्रयोगबलयुक्तः–जिनवचनध्यानसामर्थ्यसम्पन्नः परमाणौ निरुणद्धि, तथाऽचिन्त्यप्रयत्नाच्चापनयति 'ततोऽपि' तस्मादपि परमाणोः, कः ?–'जिनवैद्यः' जिनभिषग्वर इति गाथार्थः ॥ ७२ ॥ अस्मिन्नेवार्थे दृष्टान्तान्तरमभिधातुकाम आह—

उस्सारियेंधणभरो जह परिहाइ कमसो हुयासुव्व । थोविंधणावसेसो निव्वाइ तओऽवणीओ य ॥ ७३ ॥

व्याख्या—'उत्सारितेन्धनभरः' अपनीतदाह्यसङ्घातः यथा 'परिहीयते' हानिं प्रतिपद्यते 'क्रमशः' क्रमेण 'हुताशः' वह्निः, 'वा' विकल्पार्थः, स्तोकेन्धनावशेषः हुताशमात्रं भवति, तथा 'निर्वाति' विध्यायति 'ततः' स्तोकेन्धनादपनीतश्चेति गाथार्थः ॥ ७३ ॥ अस्यैव दृष्टान्तोपनयमाह—

तह विसइंधणहीणो मणोहुयासो कमेण तणुयंमि । विसइंधणे निरुंभइ निव्वाइ तओऽवणीओ य ॥ ७४ ॥

व्याख्या—तथा 'विषयेन्धनहीनः' गोचरेन्धनरहित इत्यर्थः, मन एव दुःखदाहकारणत्वाद् हुताशो मनोहुताशः, "क्रमेण' परिपाट्या 'तनुके' कृशे, क ?–'विषयेन्धने' अणावित्यर्थः, किं ?–'निरुध्यते' निश्चयेन ध्रियते, तथा निर्वाति ततः' तस्मादणोरपनीतश्चेति गाथार्थः ॥ ७४ ॥ पुनरप्यस्मिन्नेवार्थे दृष्टान्तोपनयावाह—

तोयमिव नालियाए तत्तायसभायणोदरत्थं वा । परिहाइ कमेण जहा तह जोगिमणोजल जाण ॥ ७५ ॥

व्याख्या—'तोयमिव' उदकमिव 'नालिकायाः' घटिकायाः, तथा तप्तं च तदायसभाजनं–लोहभाजनं च तप्तायसभाजनं तदुदरस्थं, वा विकल्पार्थः, परिहीयते क्रमेण यथा, एष दृष्टान्तः, अयमर्थोपनयः–'तथा' तेनैव प्रकारेण योगिमन एवाविकलत्वाज्जलं २ 'जानीहि' अवबुद्ध्यस्व, तथाऽप्रमादानलतप्तजीवभाजनस्थं मनोजलं परिहीयत इति भावना, अलमतिविस्तरेणेति गाथार्थः ॥ ७५ ॥ 'अपनयति ततोऽपि जिनवैद्य' इतिवचनाद् एवं तावत् केवली मनोयोगं निरुणद्धीत्युक्तम्, अधुना शेषयोगनिरोधविधिमभिधातुकाम आह—

एव चिय वयजोगं निरुंभइ कमेण कायजोगंपि । तो सेलेसोव्व थिरो सेलेसी केवली होइ ॥ ७६ ॥

व्याख्या—'एवमेव' एभिरेव विषादिदृष्टान्तैः, किं ?–वाग्योगं निरुणद्धि, तथा क्रमेण काययोगमपि निरुणद्धीति वर्तते, ततः 'शैलेश इव' मेरुरिव स्थिरः सन् शैलेशी केवली भवतीति गाथार्थः ॥ ७६ ॥ इह च भावार्थो नमस्कारनिर्युक्तौ प्रतिपादित एव, तथाऽपि स्थानाशून्यार्थं स एव लेशतः प्रतिपाद्यते, तत्र योगानामिदं स्वरूपम्–औदारिकादिशरीरयुक्तस्याऽऽत्मनो वीर्यपरिणतिविशेषः काययोगः, तथौदारिकवैक्रियाहारकशरीरव्यापाराहृतवाग्द्रव्यसमूहसाचिव्याज्जीवव्यापारो वाग्योगः, तथौदारिकवैक्रियाहारकशरीरव्यापाराहृतमनोद्रव्यसाचिव्याज्जीवव्यापारो मनोयोग इति, स चामीषां निरोधं कुर्वन् कालतोऽन्तर्मुहूर्तभाविनि परमपदे भवोपग्राहिकर्मसु च वेदनीयादिषु समुद्घाततो निसर्गेण वा समस्थितिषु सत्स्वेतस्मिन् काले करोति, परिमाणतोऽपि–"[1]पज्जत्तमित्तसन्निस्स जत्तियाइं जहण्णजोगिस्स । होंति मणोदव्वाइं तव्वावारो य जम्मत्तो ॥ १ ॥ तदसंखगुणविहीणे समए २ निरुंभमाणो सो। मणसो सव्वनिरोहं कुणइ असंखेज्जसमएहिं ॥ २ ॥ पज्जत्तमित्तविंदियजहण्णवइजोगपज्जया जे उ । तदसंखगुणविहीणे समए २ निरुंभंतो ॥ ३ ॥ सव्ववइजोगरोहं संखाईएहिं कुणइ समएहिं । तत्तो य सुहुमपणगस्स पढमसमओववन्नस्स ॥ ४ ॥ जो किर जहण्णजोओ तदसंखेज्जगुणहीणमेक्केक्के । समए निरुंभमाणो देहतिभागं च मुंचंतो ॥ ५ ॥ रुंभइ स कायजोगं संखाईएहिं चेव समएहिं । तो

१ पर्याप्तमात्रसज्ञिनो यावन्ति जघन्ययोगिन । भवन्ति मनोद्रव्याणि तद्व्यापारश्च यन्मात्र ॥ १ ॥ तदसख्यगुणविहीनान् समये २ निरुन्धन् स । मनस सर्वनिरोध करोत्यसख्येयसमयै ॥२॥ पर्याप्तमात्रद्वीन्द्रियस्य जघन्यवचोयोगिन पर्याया ये तु । तदसख्यगुणविहीनान् समये २ निरुन्धन् ॥ ३ ॥ सर्ववचोयोगरोध सख्यातीतै करोति समयै । ततश्च सूक्ष्मपनकस्य प्रथमसमयोत्पन्नस्य ॥४॥ य किल जघन्यो योगस्तदसख्येयगुणहीनमेकैकस्मिन्। समये २ निरुन्धन् देहत्रिभाग च मुञ्चन् ॥ ५ ॥ रुणद्धि स काययोग सख्यातीतैरेव समयै. । तत

कयजोगनिरोहो सेलेसीभावणामेइ ॥ ६ ॥ सेलेसो किर मेरू सेलेसो होइ जा तहाऽचलया । होउं च असेलेसो सेलेसी-होइ थिरयाए ॥ ७ ॥ अहवा सेलुब इसी सेलेसी होइ सो उ थिरयाए । सेव अलेसीहोई सेलेसीहोअलोवाओ ॥ ८ ॥ सीलं व समाहाणं निच्छयओ सबसंवरो सो य । तस्सेसो सीलेसो सीलेसी होइ तयवत्था ॥ ९ ॥ हस्सक्खराइं मज्झेण जेण कालेण पंच भण्णंति । अच्छइ सेलेसिगओ तत्तियमेत्तं तओ कालं ॥ १० ॥ तणुरोहारंभाओ झायइ सुहुमकिरिया-णियट्टिं सो । वोच्छिन्नकिरियमप्पडिवाई सेलेसिकालंमि ॥ ११ ॥ तयसंखेज्जगुणाए गुणसेढीऍ रइयं पुरा कम्मं । समए २ खवयं कमसो सेलेसिकालेणं ॥ १२ ॥ सबं खवेइ तं पुण निलेवं किंचि दुचरिमे समए । किंचिच्च होंति चरमे सेलेसीए तयं वोच्छं ॥ १३ ॥ मणुयगइजाइतसबादरं च पज्जत्तसुभगमाएज्जं । अन्नयरवेयणिज्जं नराउमुच्चं जसो नामं ॥ १४ ॥ संभवओ जिणणामं नराणुपुवी य चरिमसमयंमि । सेसा जिणसंताओ दुचरिमसमयंमि निट्ठंति ॥ १५ ॥ ओरालियाहिं

---

१ कृतयोगनिरोधः शैलेशीभावनामेति ॥ ६ ॥ शैलेशः किल मेरुः शैलेशी भवति या तथाऽचलता । भूत्वा चाशैलेशः शैलेशीभवति स्थिरतया ॥ ७ ॥ अथवा शैल इवर्षिः शैलर्षीभवति स एव स्थिरतया । सैवालेश्यीभवति सैलेशीभवत्यलोपात् ॥ ८ ॥ शील वा समाधानं निश्चयतः सर्वसंवरः स च । तस्येशः शीलेशः शैलेशीभवति तदवस्थः ॥ ९ ॥ ह्रस्वाक्षराणि मध्येन येन कालेन पञ्च भण्यन्ते । तिष्ठति शैलेशीगतस्तावन्मात्रं ततः कालम् ॥ १० ॥ तनुरोधारम्भात् ध्यायति सूक्ष्मक्रियाऽनिवृर्त्तिं सः । व्युच्छिन्नक्रियमप्रतिपाति शैलेशीकाले ॥ ११ ॥ तदसंख्यगुणया गुणश्रेण्या रचितं पुरा कर्म । समये २ क्षपयन् क्रमशः शैलेशीकालेन ॥ १२ ॥ सर्वं क्षपयति तत् पुनर्निर्लेपं किञ्चिद्विचरमे समये । किञ्चिच्च भवति चरमे शैलेश्यास्तद्वक्ष्ये ॥ १३ ॥ मनुजगतिजाती त्रसं बादरं च पर्याप्तसुभगादेयं च । अन्यतरवेदनीयं नरायुरुच्चैर्गोत्रं यशोनाम ॥ १४ ॥ संभवतो जिननाम नरानुपूर्वी च चरमसमये । शेषा जिनसत्काः द्विचरमसमये निस्तिष्ठन्ति ॥ १५ ॥ औदारिकाभिः

---

सर्वाहिं चयइ विप्पजहणाहिं जं भणियं । निस्सेस तहा न जहा देसच्चाएण सो पुवं ॥ १६ ॥ तस्सोदइयाभावा भवत्तं च विणियत्तए समयं । सम्मत्तणाणदंसणसुहसिद्धत्ताणि मोत्तूणं ॥ १७ ॥ उजुसेढिं पडिवन्नो समयपएसंतरं अफुसमाणो । एगसमएण सिज्झइ अह सागारोवउत्तो सो ॥ १८ ॥' अलमतिप्रसङ्गेनेति गाथार्थः ॥ ७६ ॥ उक्तं क्रमद्वारम्, इदानीं ध्यातव्यद्वारं विवृण्वन्नाह—

उप्पायट्ठिइभंगाइपज्जयाणं जमेगवत्थुंमि । नाणानयाणुसरणं पुवगयसुयाणुसारेण ॥ ७७ ॥

व्याख्या—'उत्पादस्थितिभङ्गादिपर्यायाणाम्' उत्पादादयः प्रतीताः, आदिशब्दान्मूर्तामूर्तग्रहः, अमीषां पर्यायाणां यदेकस्मिन् द्रव्ये—अण्वात्मादौ, किं ?—नानानयैः—द्रव्यास्तिकादिभिरनुसरणं—चिन्तनं, कथं ?—पूर्वगतश्रुतानुसारेण पूर्वविदः, मरुदेव्यादीनां त्वन्यथा ॥ तत्किमित्याह—

सवियारमत्थवंजणजोगंतरओ तयं पढमसुक्कं । होइ पुहुत्तवितक्कं सवियारमरागभावस्स ॥ ७८ ॥

व्याख्या—'सविचारं' सह विचारेण वर्तत इति २, विचारः—अर्थव्यञ्जनयोगसङ्क्रम इति, आह च—'अर्थव्यञ्जनयोगान्तरतः—अर्थः—द्रव्यं व्यञ्जनं—शब्दः योगः—मनःप्रभृति एतदन्तरतः—एतावद्भेदेन सविचारम्, अर्थाद्व्यञ्जनं सङ्क्रामतीति विभाषा, 'तकम्' एतत् 'प्रथमं शुक्लम्' आद्यशुक्लं भवति, किंनामेत्यत आह—'पृथक्त्ववितर्कं सविचारं' पृथक्त्वेन—

---

१ सर्वाभिस्त्यजति विप्रजहणाभिः यद्भणितम् । निःशेषत्यागेन तथा न यथा देशत्यागेन स पूर्वम् ॥१६॥ तस्यौदयिकाभावात् भव्यत्वं च विनिवर्तते समकम् । सम्यक्त्वज्ञानदर्शनसिद्धत्वानि मुक्त्वा ॥ १७ ॥ ऋजुश्रेणिं प्रतिपन्नः समयप्रदेशान्तरमस्पृशन् । एकसमयेन सिध्यति अथ साकारोपयुक्तः सः ॥ १८ ॥

---

भेदेन विस्तीर्णभावेनान्ये वितर्कः—श्रुतं यस्मिन् तत्तथा, कस्येदं भवतीत्यत आह—'अरागभावस्य' रागपरिणामरहितस्येति गाथार्थः ॥ ७८ ॥

जं पुण सुणिप्पकंपं निवायसरणप्पईवमिव चित्तं । उप्पायठिइभंगाइयाणमेगंमि पज्जाए ॥ ७९ ॥

व्याख्या—यत्पुनः 'सुनिष्प्रकम्पं' विक्षेपरहितं 'निवातशरणप्रदीप इव' निर्गतवातगृहैकदेशस्थदीप इव 'चित्तम्' अन्तःकरणं, क्व ?—उत्पादस्थितिभङ्गादीनामेकस्मिन् पर्याये ॥ ७९ ॥ ततः किमत आह—

अवियारमत्थवंजणजोगंतरओ तयं बितियसुक्कं । पुवगयसुयालंबणमेगत्तवितक्कमवियारं ॥ ८० ॥

व्याख्या—अविचारम्—असङ्क्रमं, कुतः ?—अर्थव्यञ्जनयोगान्तरतः इति पूर्ववत्, तमेवंविधं द्वितीयं शुक्लं भवति, किमभिधानमित्यत आह—'एकत्ववितर्कमविचारम्' एकत्वेन—अभेदेन वितर्कः—व्यञ्जनरूपोऽर्थरूपो वा यस्य तत्तथा, इदमपि च पूर्वगतश्रुतानुसारेणैव भवति, अविचारादि पूर्ववदिति गाथार्थः ॥ ८० ॥

निव्वाणगमणकाले केवलिणो दरनिरुद्धजोगस्स । सुहुमकिरियाऽनियट्टिं तइयं तणुकायकिरियस्स ॥ ८१ ॥

व्याख्या—'निर्वाणगमनकाले' मोक्षगमनप्रत्यासन्नसमये 'केवलिनः' सर्वज्ञस्य मनोवाग्योगद्वये निरुद्धे सति अर्द्धनिरुद्धकाययोगस्य, किं ?—'सूक्ष्मक्रियाऽनिवर्ति' सूक्ष्मा क्रिया यस्य तत्तथा सूक्ष्मक्रियं च तदनिवर्ति चेति नाम, निवर्तितुं शीलमस्येति निवर्ति प्रवर्द्धमानतरपरिणामात् न निवर्ति अनिवर्ति तृतीयं, ध्यानमिति गम्यते, 'तनुकायक्रियस्ये'ति तन्वी उच्छ्वासनिःश्वासादिलक्षणा कायक्रिया यस्य स तथाविधस्तस्येति गाथार्थः ॥ ८१ ॥

तस्सेव य सेलेसीगयस्स सेलोव्व णिप्पकंपस्स । वोच्छिन्नकिरियमप्पडिवाइ ज्झाणं परमसुक्कं ॥ ८२ ॥

व्याख्या—'तस्यैव च' केवलिनः 'शैलेशीगतस्य' शैलेशी—प्राग्वर्णिता तां प्राप्तस्य, किंविशिष्टस्य ?—निरुद्धयोगत्वात् 'शैलेश इव निष्प्रकम्पस्य' मेरोरिव स्थिरस्येत्यर्थः, किं ?—व्यवच्छिन्नक्रियं योगाभावात् तद् 'अप्रतिपाति' अनुपरतस्वभावमिति, एतदेव चास्य नाम ध्यानं परमशुक्लं—प्रकटार्थमिति गाथार्थः ॥ ८२ ॥ इत्थं चतुर्विधं ध्यानमभिधायाधुनैतत्प्रतिबद्धमेव वक्तव्यताशेषमभिधित्सुराह—

पढमं जोगे जोगेसु वा मयं बितियमेव जोगंमि । तइयं च कायजोगे सुक्कमजोगंमि य चउत्थं ॥ ८३ ॥

व्याख्या—'प्रथमं' पृथक्त्ववितर्कसविचारं 'योगे' मनआदौ योगेषु वा सर्वेषु 'मतम्' इष्टं, तच्चागमिकश्रुतपाठिनः, 'द्वितीयम्' एकत्ववितर्कमविचारं तदेकयोग एव, अन्यतरस्मिन् सङ्क्रमाभावात्, तृतीयं च सूक्ष्मक्रियाऽनिवर्ति काययोगे, न योगान्तरे, शुक्लम् 'अयोगिनि च' शैलेशीकेवलिनि 'चतुर्थं' व्युपरतक्रियाऽप्रतिपातीति गाथार्थः ॥८३॥ आह—शुक्लध्यानोपरिभेदद्वये मनो नास्त्येव, अमनस्कत्वात् केवलिनः, ध्यानं च मनोविशेषः 'ध्यै चिन्ताया'मिति पाठात्, तदेतत्कथम् ?, उच्यते—

जह छउमत्थस्स मणो झाणं भण्णइ सुनिच्चलो संतो । तह केवलिणो काओ सुनिच्चलो भण्णए झाणं ॥ ८४ ॥

व्याख्या—यथा छद्मस्थस्य मनः, किं ?—ध्यानं भण्यते सुनिश्चलं सत्, 'तथा' तेनैव प्रकारेण योगत्वाव्यभिचारात्केवलिनः कायः सुनिश्चलो भण्यते ध्यानमिति गाथार्थः ॥ ८४ ॥ आह—चतुर्थे निरुद्धत्वादसावपि न भवति, तथाविधभावेऽपि च सर्वभावप्रसङ्गः, तत्र का वार्तेति ?, उच्यते—

पुव्वप्पओगओ च्चिय कम्मविणिज्जरणहेउतो यावि । सद्दत्थबहुत्ताओ तह जिणचंदागमाओ य ॥ ८५ ॥
चित्ताभावेवि सया सुहुमोवरयकिरियाइ भण्णंति । जीवोवओगसब्भावओ भवत्थस्स झाणाइं ॥ ८६ ॥

व्याख्या—काययोगनिरोधिनो योगिनोऽयोगिनोऽपि चित्ताभावेऽपि सूक्ष्मोपरतक्रियो भण्यते, सूक्ष्मग्रहणात् सूक्ष्मक्रियाऽनिवर्तिनो ग्रहणम्, उपरतग्रहणाद्व्युपरतक्रियाऽप्रतिपातिन इति, पूर्वप्रयोगादिति हेतुः, कुलालचक्रभ्रमणवदिति दृष्टान्तोऽभ्यूह्यः, यथा चक्रं भ्रमणनिमित्तदण्डादिक्रियाऽभावेऽपि भ्रमति तथाऽस्यापि मनःप्रभृतियोगोपरमेऽपि जीवोपयोगसद्भावत' भावमनसो भावात् भवस्थस्य ध्याने इति, अपिशब्दश्चोदनानिर्णयप्रथमहेतुसम्भावनार्थः, चशब्दस्तु प्रस्तुतहेत्वनुकर्षणार्थः, एवं शेषहेतवोऽप्यनया गाथया योजनीयाः, विशेषस्तूच्यते—'कर्मविनिर्जरणहेतुतश्चापि' कर्मविनिर्जरणहेतुत्वात् क्षपकश्रेणिवत्, भवति च क्षपकश्रेण्यामिवास्य भवोपग्राहिकर्मनिर्जरेति भावः, चशब्दः प्रस्तुतहेत्वनुकर्षणार्थः, अपिशब्दस्तु द्वितीयहेतुसम्भावनार्थ इति, 'तथा शब्दार्थबहुत्वात्' यथैकस्यैव हरिशब्दस्य शक्रशाखामृगादयोऽनेकार्थाः एवं ध्यानशब्दस्यापि न विरोधः, 'ध्यै चिन्तायां' 'ध्यै कायनिरोधे' 'ध्यै अयोगित्वे' इत्यादि, तथा जिनचन्द्रागमाच्चैतदेवमिति, उक्तं च—'आगमश्चोपपत्तिश्च, सम्पूर्णं दृष्टिलक्षणम् । अतीन्द्रियाणामर्थानां, सद्भावप्रतिपत्तये ॥ १ ॥ इत्यादि गाथाद्वयार्थः ॥ ८५-८६ ॥ उक्तं ध्यातव्यद्वारं, ध्यातारस्तु धर्मध्यानाधिकार एवोक्ताः, अधुनाऽनुप्रेक्षाद्वारमुच्यते—

सुक्कज्झाणसुभावियचित्तो चिंतेइ झाणविरमेऽवि । णिययमणुप्पेहाओ चत्तारि चरित्तसंपन्नो ॥ ८७ ॥

व्याख्या—शुक्लध्यानसुभावितचित्तश्चिन्तयति ध्यानविरमेऽपि नियतमनुप्रेक्षाश्चतस्रश्चारित्रसम्पन्नः, तत्परिणामरहितस्य तदभावादिति गाथार्थः ॥ ८७ ॥ ताश्चैताः—

आसवदारावाए तह संसारासुहाणुभावं च । भवसंताणमणंतं वत्थूणं विपरिणामं च ॥ ८८ ॥

व्याख्या—आश्रवद्वाराणि—मिथ्यात्वादीनि तदपायान्—दुःखलक्षणान्, तथा संसारानुभावं च, 'धी संसारो' इत्यादि, भवसन्तानमनन्तं भाविनं नारकाद्यपेक्षया, वस्तूनां विपरिणामं च सचेतनाचेतनानां 'सव्वट्ठाणाणि असासयाणी'त्यादि, एताश्चतस्रोऽप्यपायाशुभानन्तविपरिणामानुप्रेक्षा आद्यद्वयभेदसङ्गता एव द्रष्टव्या इति गाथार्थः ॥ ८८ ॥ उक्तमनुप्रेक्षाद्वारम्, इदानीं लेश्याद्वाराभिधित्सयाऽऽह—

सुक्काए लेसाए दो ततियं परमसुक्कलेस्साए । थिरयाजियसेलेसिं लेसाईयं परमसुक्कं ॥ ८९ ॥

व्याख्या—सामान्येन शुक्लायां लेश्यायां 'द्वे' आद्ये उक्तलक्षणे 'तृतीयम्' उक्तलक्षणमेव, परमशुक्ललेश्यायां 'स्थिरताजितशैलेशं' मेरोरपि निष्प्रकम्पतरमित्यर्थः, लेश्यातीतं 'परमशुक्लं' चतुर्थमिति गाथार्थः ॥ ८९ ॥ उक्तं लेश्याद्वारम्, अधुना लिङ्गद्वारं विवरीपुस्तेषां नामप्रमाणस्वरूपगुणभावनार्थमाह—

अवहासंमोहविवेगविउस्सग्गा तस्स होंति लिंगाइं । लिंगिज्जइ जेहिं मुणी सुक्कज्झाणोवगयचित्तो ॥ ९० ॥

व्याख्या—अवधासम्मोहविवेकव्युत्सर्गाः 'तस्य' शुक्लध्यानस्य भवन्ति लिङ्गानि, 'लिङ्ग्यते' गम्यते यैर्मुनिः शुक्लध्यानोपगतचित्त इति गाथाक्षरार्थः ॥ ९० ॥ अधुना भावार्थमाह—

चालिज्जइ बीभेइ य धीरो न परीसहोवसग्गेहिं । सुहुमेसु न संमुज्झइ भावेसु न देवमायासु ॥ ९१ ॥

व्याख्या—चाल्यते ध्यानात् न परीषहोपसर्गैर्बिभेति वा 'धीरः' बुद्धिमान् स्थिरो वा न तेभ्य इत्यवधलिङ्गं, 'सूक्ष्मेषु'

अत्यन्तगहनेषु 'न समुह्यते' न सम्मोहमुपगच्छति, 'भावेषु' पदार्थेषु न देवमायासु अनेकरूपास्वित्यसम्मोहलिङ्गमिति गाथाक्षरार्थः ॥ ९१ ॥

देहविवित्तं पेच्छइ अप्पाणं तह य सव्वसंजोगे । देहोवहिवोसग्गं निस्संगो सव्वहा कुणइ ॥ ९२ ॥

व्याख्या—देहविविक्तं पश्यत्यात्मानं तथा च सर्वसंयोगानिति विवेकलिङ्गं, देहोपधिव्युत्सर्गं निःसङ्गः सर्वथा करोति व्युत्सर्गलिङ्गमिति गाथार्थः ॥ ९२ ॥ गतं लिङ्गद्वारं, साम्प्रतं फलद्वारमुच्यते, इह च लाघवार्थं प्रथमोपन्यस्तं धर्मफलमभिधाय शुक्लध्यानफलमाह, धर्मफलानामेव शुद्धतराणामाद्यशुक्लद्वयफलत्वाद्, अत आह—

होंति सुहासवसंवरविणिज्जरामरसुहाइं विउलाइं । झाणवरस्स फलाइं सुहाणुबंधीणि धम्मस्स ॥ ९३ ॥

व्याख्या—भवन्ति 'शुभाश्रवसंवरविनिर्जरामरसुखानि' शुभाश्रवः—पुण्याश्रवः संवरः—अशुभकर्मागमनिरोधः विनिर्जरा—कर्मक्षयः अमरसुखानि—देवसुखानि, एतानि च दीर्घस्थितिविशुद्ध्युपपाताभ्यां 'विपुलानि' विस्तीर्णानि, 'ध्यानवरस्य' ध्यानप्रधानस्य फलानि 'शुभानुबन्धीनि' सुकुलप्रत्यायातिपुनर्बोधिलाभभोगप्रव्रज्याकेवलशैलेश्यपवर्गानुबन्धीनि 'धर्मस्य' ध्यानस्येति गाथार्थः ॥ ९३ ॥ उक्तानि धर्मफलानि, अधुना शुक्लमधिकृत्याह—

ते य विसेसेण सुभासवादओऽणुत्तरामरसुहं च । दोण्हं सुक्काण फलं परिनिव्वाणं परिल्लाणं ॥ ९४ ॥

व्याख्या—ते च विशेषेण 'शुभाश्रवादयः' अनन्तरोदिताः, अनुत्तरामरसुखं च द्वयोः शुक्लयोः फलमाद्ययोः 'परिनिर्वाणं' मोक्षगमनं 'परिल्लाणं'ति चरमयोर्द्वयोरिति गाथार्थः ॥ ९४ ॥ अथवा सामान्येनैव संसारप्रतिपक्षभूते एते इति दर्शयति—

आसवदारा संसारहेयवो जं ण धम्मसुक्केसु । संसारकारणाइं तओ धुवं धम्मसुक्काइं ॥ ९५ ॥

व्याख्या—आश्रवद्वाराणि संसारहेतवो वर्तन्ते, तानि च यस्मान्न शुक्लधर्मयोर्भवन्ति संसारकारणानि तस्माद् 'ध्रुवं' नियमेन धर्मशुक्ले इति गाथार्थः ॥ ९५ ॥ संसारप्रतिपक्षतया च मोक्षहेतुर्ध्यानमित्यावेदयन्नाह—

संवरविणिज्जराओ मोक्खस्स पहो तवो पहो तासिं । झाणं च पहाणंगं तवस्स तो मोक्खहेऊयं ॥ ९६ ॥

व्याख्या—संवरनिर्जरे 'मोक्षस्य पन्थाः' अपवर्गस्य मार्गः, तपः 'पन्थाः' मार्गः 'तयोः' संवरनिर्जरयोः ध्यानं च प्रधानाङ्गं तपसः आन्तरकारणत्वात्, ततो मोक्षहेतुस्तद्ध्यानमिति गाथार्थः ॥ ९६ ॥ अमुमेवार्थं सुखप्रतिपत्तये दृष्टान्तैः प्रतिपादयन्नाह—

अंबरलोहमहीणं कमसो जह मलकलंकपंकाणं । सोज्झावणयणसोसे साहेंति जलाणलाइच्चा ॥ ९७ ॥

व्याख्या—'अम्बरलोहमहीनां' वस्त्रलोहार्द्रक्षितीनां 'क्रमशः' क्रमेण यथा मलकलङ्कपङ्कानां यथासङ्ख्यं शोध्या(ध्य)पनयनशोषान् यथासङ्ख्यमेव 'साधयन्ति' निर्वर्तयन्ति जलानलादित्या इति गाथार्थः ॥ ९७ ॥

तह सोज्झाइसमत्था जीवंबरलोहमेइणिगयाणं । झाणजलाणलसूरा कम्ममलकलंकपंकाणं ॥ ९८ ॥

व्याख्या—तथा शोध्यादिसमर्था जीवाम्बरलोहमेदिनीगतानां ध्यानमेव जलानलसूर्याः कर्मैव मलकलङ्कपङ्कास्तेषामिति गाथार्थः ॥ ९८ ॥ किं च—

तापो सोसो भेओ जोगाणं झाणओ जहा निययं । तह तावसोसभेया कम्मस्सवि झाइणो नियमा ॥ ९९ ॥

व्याख्या—तापः शोषो भेदो योगानां 'ध्यानतः' ध्यानात् यथा 'नियतम्' अवश्यं, तत्र तापः—दुःखं तत एव शोषः—दौर्बल्यं तत एव भेदः—विदारणं योगानां—वागादीनां, 'तथा' तेनैव प्रकारेण तापशोषभेदाः कर्मणोऽपि भवन्ति, कस्य?—'ध्यायिनः' न यदृच्छया नियमेनेति गाथार्थः ॥ ९९ ॥ किं च—

जह रोगासयसमणं विसोसणविरेयणोसहविहीहिं । तह कम्मामयसमणं झाणाणसणाइजोगेहिं ॥ १०० ॥

व्याख्या—यथा 'रोगाशयशमनं' रोगनिदानचिकित्सा 'विशोषणविरेचनौषधविधिभिः' अभोजनविरेकौषधप्रकारैः, तथा 'कर्मामयशमनं' कर्मरोगचिकित्सा ध्यानानशनादिभिर्योगैः, आदिशब्दाद् ध्यानवृद्धिकारकशेषतपोभेदग्रहणमिति गाथार्थः ॥ १०० ॥ किं च—

जह चिरसंचियमिंधणमनलो पवणसहिओ दुयं दहइ । तह कम्मेंधणममियं खणेण झाणाणलो दहइ ॥ १०१ ॥

व्याख्या—यथा 'चिरसञ्चितं' प्रभूतकालसञ्चितम् 'इन्धनं' काष्ठादि 'अनलः' अग्निः 'पवनसहितः' वायुसमन्वितः 'द्रुतं' शीघ्रं च 'दहति' भस्मीकरोति, तथा दुःखतापहेतुत्वात् कर्मैवेन्धनं कर्मेन्धनम् 'अमितम्' अनेकभवोपात्तमनन्तं 'क्षणेन' समयेन ध्यानमनल इव ध्यानानलः असौ 'दहति' भमीकरोतीति गाथार्थः ॥ १०१ ॥

जह वा घणसंघाया खणेण पवणाहया विलिज्जंति । झाणपवणावहूया तह कम्मघणा विलिज्जंति ॥ १०२ ॥

व्याख्या—यथा वा 'घनसङ्घाताः' मेघौघाः क्षणेन 'पवनाहताः' वायुप्रेरिता विलयं—विनाशं यान्ति—गच्छन्ति, 'ध्यानपवनावधूता' ध्यानवायुविक्षिप्ताः तथा कर्मैव जीवस्वभावावरणाद् घनाः २, उक्तं च—"स्थितः शीतांशुवज्जीवः, प्रकृत्या

भावशुद्ध्या । चन्द्रिकावच्च विज्ञानं, तदावरणमभ्रवद् ॥ १ ॥" इत्यादि, 'विलीयन्ते' विनाशमुपयान्तीति गाथार्थः ॥ १०२ ॥ किं चेदमन्यद् ?, इहलोकप्रतीतमेव ध्यानफलमिति दर्शयति—

न कसायसमुत्थेहि य बाहिज्जइ माणसेहिं दुक्खेहिं । ईसाविसायसोगाइएहिं झाणोवगयचित्तो ॥ १०३ ॥

व्याख्या—'न कषायसमुत्थैश्च' न क्रोधाद्युद्भवैश्च 'बाध्यते' पीड्यते मानसैर्दुःखैः, मानसग्रहणात्ताप इत्याद्यपि यदुक्तं तन्न बाध्यते 'ईर्ष्याविषादशोकादिभिः' तत्र प्रतिपक्षाभ्युदयोपलम्भजनितो मत्सरविशेष ईर्ष्या विषादः—वैक्लव्यं शोकः—दैन्यम्, आदिशब्दाद् हर्षादिपरिग्रहः, ध्यानोपगतचित्त इति प्रकटार्थमयं गाथार्थः ॥ १०३ ॥

सीयायवाइएहि य सारीरेहिं सुबहुप्पगारेहिं । झाणसुनिच्चलचित्तो न बहिज्जइ निज्जरापेही ॥ १०४ ॥

व्याख्या—इह कारणे कार्योपचारात् शीतातपादिभिश्च, आदिशब्दात् क्षुदादिपरिग्रहः, शारीरैः 'सुबहुप्रकारैः' अनेकभेदैः 'ध्यानसुनिश्चलचित्तः' ध्यानभावितमतिर्न बाध्यते, ध्यानसुखादिति गम्यते, अथवा न शक्यते चालयितुं तत एव, 'निर्जरापेक्षी' कर्मक्षयापेक्षक इति गाथार्थः ॥ १०४ ॥ उक्तं फलद्वारम्, अधुनोपसंहरन्नाह—

इय सव्वगुणाधाणं दिट्ठादिट्ठसुहसाहणं झाणं । सुपसत्थं सद्धेयं नेयं झेयं च निच्चंपि ॥ १०५ ॥

व्याख्या—'इय' एवमुक्तेन प्रकारेण 'सर्वगुणाधानम्' अशेषगुणस्थानं दृष्टादृष्टसुखसाधनं ध्यानमुक्तन्यायात् सुष्टु प्रशस्तं २, तीर्थकरगणधरादिभिरासेवितत्वात्, यतश्चैवमतः श्रद्धेयं नान्यथैतदिति भावनया 'ज्ञेयं' ज्ञातव्यं स्वरूपतः 'ध्येयम्' अनुचिन्तनीयं क्रियया, एवं च सति सम्यग्दर्शनज्ञानचारित्राण्यासेवितानि भवन्ति, 'नित्यमपि' सर्वकालमपि, आह—एवं तर्हि सर्वक्रियालोपः प्राप्नोति, न, तदासेवनस्यापि तत्त्वतो ध्यानत्वात्, नास्ति काचिदसौ क्रिया यया साधूनां ध्यानं न भवतीति गाथार्थः ॥ १०५ ॥ ग्रन्थाग्रं १५६९६ ॥ समाप्तं ध्यानशतकं ॥

पडिक्कमामि पंचहिं किरियाहिं काइयाए अहिगरणियाए पाउसियाए पारितावणियाए पाणाइवायकिरियाए (सूत्रम्) प्रतिक्रमामि पञ्चभिः क्रियाभिः—व्यापारलक्षणाभिर्योऽतिचारः कृतः, तद्यथा—'काइयाए' इत्यादि, चीयत इति कायः, कायेन निर्वृत्ता कायिकी तया, सा पुनस्त्रिधा—अविरतकायिकी दुष्प्रणिहितकायिकी उपरतकायिकी, (च) तत्र मिथ्यादृष्टेरविरतसम्यग्दृष्टेश्चाऽऽद्या अविरतस्य कायिकी—उत्क्षेपणादिलक्षणा क्रिया कर्मबन्धनिबन्धनाऽविरतकायिकी, एवमन्यत्रापि षष्ठीसमासो योज्यः, द्वितीया दुष्प्रणिहितकायिकी प्रमत्तसंयतस्य, सा पुनर्द्विधा—इन्द्रियदुष्प्रणिहितकायिकी नोइन्द्रियदुष्प्रणिहितकायिकी च, तत्राऽऽद्येन्द्रियैः—श्रोत्रादिभिर्दुष्प्रणिहितस्य—इष्टानिष्टविषयप्राप्तौ मनाक्सङ्गनिर्वेदद्वारेणापवर्गमार्गं प्रति दुर्व्यवस्थितस्य कायिकी, एवं नोइन्द्रियेण—मनसा दुष्प्रणिहितस्याशुभसङ्कल्पद्वारेण दुर्व्यवस्थितस्य कायिकी, तृतीयाऽप्रमत्तसंयतस्य—उपरतस्य—सावद्ययोगेभ्यो निवृत्तस्य कायिकी, गता कायिकी १, अधिक्रियत आत्मा नरकादिषु येन तदधिकरणम्—अनुष्ठानं बाह्यं वा वस्तु चक्रमहादि तेन निर्वृत्ता—अधिकरणिकी तया, सा पुनर्द्विधा—अधिकरणप्रवर्तिनी निर्वर्तिनी च, तत्र प्रवर्तिनी चक्रमहःपशुबन्धादिप्रवर्तिनी, निर्वर्तिनी खड्गादिनिर्वर्तिनी, अलमन्यैरुदाहरणैः, अनयोरेवान्तःपातित्वात्तेषां, गताऽधिकरणिकी २, प्रद्वेषः—मत्सरस्तेन निर्वृत्ता प्राद्वेषिकी, असावपि द्विधा—जीवप्राद्वेषिक्यजीवप्राद्वेषिकी च, आद्या जीवे प्रद्वेषं गच्छतः, द्वितीया पुनरजीवे, तथाहि—पाषाणादौ प्रस्खलितस्तत्प्रद्वेषमावहति गता तृतीया ३, परितापनं—ताडनादिदुःखविशेषलक्षणं तेन निर्वृत्ता पारितापनिकी तया, असावपि द्विधैव—स्वदेहपारितापनिकी परदेहपारितापनिकी च, आद्या स्वदेहे परितापनं कुर्वतो द्वितीया परदेहे परितापनमिति, तथा च अन्यरुष्टोऽपि स्वदेहपरितापनं करोत्येव कश्चिज्जडः, अथवा स्वहस्तपारितापनिकी परहस्तपारितापनिकी च, आद्या स्वहस्तेन परितापनं कुर्वतः द्वितीया परहस्तेन कारयतः, गता चतुर्थी ४, प्राणातिपातः—प्रतीतः, तद्विषया क्रिया प्राणातिपातक्रिया तया, असावपि द्विधा—स्वप्राणातिपातक्रिया परप्राणातिपातक्रिया च, तत्राऽऽद्याऽऽत्मीयप्राणातिपातं कुर्वतः द्वितीया परप्राणातिपातमिति, तथा च कश्चिन्निर्वेदतः स्वर्गाद्यर्थं वा गिरिपतनादिना स्वप्राणातिपातं करोति, तथा क्रोधमानमायालोभमोहवशाच्च परप्राणातिपातमिति, क्रोधेनाऽऽक्रुष्टः रुष्टो वा व्यापादयति, मानेन जात्यादिभिर्हीलितः, मायायाऽपकारिणं विश्वासेन, लोभेन शौकरिकः, मोहेन संसारमोचकः स्मार्तो वा याग इति, गता पञ्चमी ५। क्रियाऽधिकाराच्च शिष्यहितायानुपात्ता अपि सूत्रे अन्या अपि विंशतिः क्रियाः प्रदर्श्यन्ते, तंजहा—आरंभिया १ परिग्गहिया २ मायावत्तिया ३ मिच्छादंसणवत्तिया ४ अपच्चक्खाणकिरिया ५ दिट्ठिया ६ पुट्ठिया ७ पाडुच्चिया ८ सामंतोवणिवाइया ९ नेसत्थिया १० साहत्थिया ११ आणमणिया १२ वियारणिया १३ अणाभोगवत्तिया १४ अणवकंखवत्तिया १५ पओगकिरिया १६ समुयाणकिरिया १७ पेज्जवत्तिया १८ दोसवत्तिया १९ ईरियावहिया २० चेति, तत्थारंभिया दुविहा—जीवारंभिया य अजीवारंभिया य जीवारंभिया—जं जीवे

१ तद्यथा—आरम्भिकी पारिग्रहिकी मायाप्रत्ययिकी मिथ्यादर्शनप्रत्ययिकी अप्रत्याख्यानक्रिया दृष्टिजा स्पृष्टिजा प्रातीत्यिकी सामन्तोपनिपातिकी नैशस्त्रिकी स्वहस्तिकी आज्ञापनी विदारणी अनाभोगप्रत्ययिकी अनवकाङ्क्षाप्रत्ययिकी प्रयोगक्रिया समुदानक्रिया प्रेमप्रत्ययिकी द्वेषप्रत्ययिकी ऐर्यापथिकी चेति । तत्रारम्भिकी द्विविधा—जीवारम्भिकी अजीवारम्भिकी च, जीवारम्भिकी यज्जीवान्

आरंभइ अजीवारंभिया—अजीवे आरंभइ १, पारिग्गहिया किरिया दुविहा—जीवपारिग्गहिया अजीवपारिग्गहिया य, जीवपारिग्गहिया—जीवे परिगिण्हइ, अजीवपारिग्गहिया—अजीवे परिगिण्हइ २, मायावत्तिया किरिया दुविहा—आयभाववंचणा य परभाववंचणा य, आयभाववंचणा अप्पणोच्चयं भावं गूहइ नियडीमंतो उज्जुयभावं दंसेइ, संजमाइसिढिलो वा करणफडाडोवं दरिसेइ, परभाववंचणया तं तं आयरति जेण परो वंचिज्जइ कूडलेहकरणाईहिं ३, मिच्छादंसणवत्तिया किरिया दुविहा—अणभिग्गहियमिच्छादंसणवत्तिया य अभिग्गहियमिच्छादंसणवत्तिया य, अणभिग्गहियमिच्छादंसणवत्तिया असंणीण संणीणवि जेहिं न किंचि कुतित्थियमयं पडिवण्णं, अभिग्गहियमिच्छादंसणवत्तिया किरिया दुविहा—हीणाइरित्तदंसणे य तव्वइरित्तदंसणे य, हीणा जहा—अंगुट्ठपव्वमेत्तो अप्पा जवमेत्तो सामागतंदुलमेत्तो वालग्गमेत्तो परमाणुमेत्तो हृदये जाज्वल्यमानस्तिष्ठति भ्रूललाटमध्ये वा, इत्येवमादि, अहिगा जहा—पंचधणुसइगो अप्पा सव्वगओ अकत्ता अचेयणो

१ आरम्भयति, अजीवारम्भिकी अजीवानारम्भयति, पारिग्रहिकी क्रिया द्विविधा—जीवपारिग्रहिकी अजीवपारिग्रहिकी च, जीवपारिग्रहिकी जीवान् परिगृह्णाति अजीवपारिग्रहिकी अजीवान् परिगृह्णाति, मायाप्रत्ययिकी क्रिया द्विविधा—आत्मभाववञ्चनता च परभाववञ्चनता च, आत्मभाववञ्चनता आत्मीयं भावं निगूहति निकृतिमान् ऋजुभावं दर्शयति, संयमादिशिथिलो वा करणस्फटाटोपं दर्शयति, परभाववञ्चनता तत्तदाचरति येन परो वञ्च्यते कूटलेखकरणादिभिः, मिथ्यादर्शनप्रत्ययिकी क्रिया द्विविधा—अनभिगृहीतमिथ्यादर्शनप्रत्ययिकी च अभिगृहीतमिथ्यादर्शनप्रत्ययिकी च, अनभिगृहीतमिथ्यादर्शनप्रत्ययिकी असंज्ञिनां संज्ञिनामपि यैर्न किञ्चित् कुतीर्थिकमतं प्रतिपन्नं, अभिगृहीतमिथ्यादर्शनप्रत्ययिकी क्रिया द्विविधा—हीनातिरिक्तदर्शने च तद्व्यतिरिक्तदर्शने च, हीना यथा अङ्गुष्ठपर्वमात्र आत्मा यवमात्रः श्यामाकतन्दुलमात्रो वालाग्रमात्रः परमाणुमात्रः। अधिका यथा पञ्चधनुःशतिक आत्मा सर्वगतोऽकर्ता अचेतन

इत्येवमादि, एवं हीणाइरित्तदंसणं, तव्वइरित्तदंसणं नास्त्येवाऽऽत्माऽऽत्मीयो वा भावः नास्त्ययं लोकः न परलोकः असत्स्वभावाः सर्वभावा इत्येवमादि, अपच्चक्खाणकिरिया अविरतानामेव, तेषां न किञ्चिद् विरतिर(नम)स्ति, सा दुविहा—जीवअपच्चक्खाणकिरिया अजीवऽपच्चक्खाणकिरिया य, न केसुइ जीवेसु अजीवेसु य वा विरती अत्थित्ति ५, दिट्ठिया किरिया दुविहा, तंजहा—जीवदिट्ठिया य अजीवदिट्ठीया य, जीवदिट्ठीया आसाईणं चक्खुदंसणवत्तियाए गच्छइ, अजीवदिट्ठिया चित्तकम्माईणं ६, पुट्ठिया किरिया दुविहा पण्णत्ता—जीवपुट्ठिया अजीवपुट्ठिया य, जीवपुट्ठिया जा जीवाहियारं पुच्छइ रागेण वा दोसेण वा, अजीवाहिगारं वा, अहवा पुट्ठियत्ति फरिसणकिरिया, तत्थ जीवफरिसणकिरिया इत्थी पुरिसं नपुंसगं वा स्पृशति, संघट्टेइत्ति भणियं होइ, अजीवेसु सुहनिमित्तं मियलोमाइ वत्थजायं मोत्तिगादि वा रयणजायं स्पृशति ७, पाडुच्चिया किरिया दुविहा—जीवपाडुच्चिया अजीवपाडुच्चिया य, जीवं पडुच्च जो बंधो सा जीवपाडुच्चिया, जो पुण अजीवं पडुच्च रागदोसुब्भवो सा अजीवपाडुच्चिया ८, सामंतोवणिवाइया समन्तादनुपततीति सामंतोवणिवाइया

१ एवं हीनातिरिक्तदर्शनं, तद्व्यतिरिक्तदर्शनं,—अप्रत्याख्यानक्रिया—सा द्विविधा जीवाप्रत्याख्यानक्रिया अजीवाप्रत्याख्यानक्रिया च, न केषुचिज्जीवेषु अजीवेषु च वा विरतिरस्तीति, दृष्टिजा क्रिया द्विविधा, तद्यथा—जीवदृष्टिजा च अजीवदृष्टिजा च, जीवदृष्टिजा अश्वादीनां चक्षुर्दर्शनप्रत्ययाय गच्छति, अजीवदृष्टिजा चित्रकर्मादीनां, प्राश्निकी, पृष्टिजा क्रिया द्विविधा तद्यथा—जीवप्राश्निकी अजीवप्राश्निकी च, जीवप्राश्निकी या जीवाधिकारं पृच्छति रागेण वा द्वेषेण वा, अजीवाधिकारं वा, अथवा स्पृष्टिजेति स्पर्शनक्रिया, तत्र जीवस्पर्शनक्रिया स्त्रियं पुरुषं नपुंसकं संघट्टयतीति भणितं भवति, अजीवेषु सुखनिमित्तं मृगलोमादि वस्त्रजातं मौक्तिकादि वा रत्नजातं, प्रातीत्यिकी क्रिया द्विविधा—जीवप्रातीत्यिकी अजीवप्रातीत्यिकी च, जीवं प्रतीत्य यो बन्धः सा जीवप्रातीत्यिकी, यः पुनरजीवं प्रतीत्य रागद्वेषोद्भवः साऽजीवप्रातीत्यिकी, सामन्तोपनिपातिकी—सामन्तोपनिपातिकी

सा दुविहा—जीवसामंतोवणिवाइया य अजीवसामंतोवणिवाइया य, जीवसामंतोवणिवाइया जहा—एगस्स संडो तं जणो जहा जहा पलोएइ पसंसइ य तहा तहा सो हरिसं गच्छइ, अजीवेवि रहकम्माई, अहवा सामंतोवणिवाइया दुविहा—देससामंतोवणिवाइया य सव्वसामंतोवणिवाइया य, देससामंतोवणिवाइया प्रेक्षकान् प्रति यत्रैकदेशेनाऽऽगमो भवत्यसंयतानां सा देससामंतोवणिवाइया, सव्वसामंतोवणिवाइया य यत्र सर्वतः समन्तात् प्रेक्षकाणामागमो भवति सा सव्वसामंतोवणिवाइया, अहवा समन्तादनुपतन्ति प्रमत्तसंजयाणं अन्नपाणं प्रति अवंगुरिते संपातिमा सत्ता विणस्संति ८, नेसत्थिया किरिया दुविहा—जीवनेसत्थिया अजीवनेसत्थिया य, जीवनेसत्थिया रायाइसंदेसाओ जहा उदगस्स जंतादीहिं, अजीवनेसत्थिया जहा पहाणकंडाईणं गोफणधणुहमाईहिं निसिरइ, अहवा नेसत्थिया जीवे जीवं निसिरइ पुत्तं सीसं वा, अजीवे सूत्रव्यपेतं निसिरइ वस्त्रं पात्रं वा, सृज विसर्गे इति १०, साहत्थिया किरिया दुविहा—जीवसाहत्थिया अजीवसाहत्थिया

१ सा द्विविधा—जीवसामन्तोपनिपातिकी चाजीवसामन्तोपनिपातिकी च, जीवसामन्तोपनिपातिकी यथा एकस्य षण्ढस्तं जनो यथा यथा प्रलोकते प्रशंसति च तथा तथा स दर्पं गच्छति, अजीवानपि रथकर्मादीनि, अथवा सामन्तोपनिपातिकी द्विविधा—देशसामन्तोपनिपातिकी च सर्वसामन्तोपनिपातिकी च, देशसामन्तोपनिपातकी—सा देशसामन्तोपनिपातिकी, सर्वसामन्तोपनिपातिकी च—सा सर्वसामन्तोपनिपातिकी, अथवा प्रमत्तसंयतानामन्नपानं प्रति अनाच्छादिते संपातिमाः सत्त्वा विनश्यन्ति, नैशस्त्रिकी क्रिया द्विविधा—जीवनैशस्त्रिकी अजीवनैशस्त्रिकी च, जीवनैशस्त्रिकी यथा राजादिसंदेशात् यथा यन्त्रादिभिरुदकस्य, अजीवनैशस्त्रिकी यथा पाषाणकाण्डादीनि गोफणधनुरादिभिर्निसृज्यन्ते, अथवा नैशस्त्रिकी जीवे जीवं निसृजति पुत्रं शिष्यं वा, अजीवे निसृजति, स्वाहस्तिकी क्रिया द्विविधा—जीवस्वाहस्तिकी अजीवस्वाहस्तिकी च

य, जीवसाहत्थिया जं जीवेण जीवं मारेइ, अजीवसाहत्थिया जहा–असिमाईहिं, अहवा जीवसाहत्थिया जं जीवं सहत्थेण तालेइ, अजीवसाहत्थिया अजीवं सहत्थेण तालेइ वत्थं पत्तं वा ११, आणमणिया किरिया दुविहा–जीवआणमणिया अजीवआणमणिया य, जीवाणमणी जीवं आज्ञापयति परेण, अजीवं वा आणवावेइ १२, वेयारणिया दुविहा–जीववेयारणिया य अजीववेयारणिया य, जीववेयारणिया जीवं विदारेइ, स्फोटयतीत्यर्थः, एवमजीवमपि, अहवा जीवमजीवं वा आभासिएसु विक्केमाणो दो भासिउ वा विदारेइ परियच्छावेइत्ति भणियं होइ, अहवा जीवं वियारेइ असंतगुणेहिं एरिसो तारिसो तुमंति, अजीवं वा वेतारणबुद्धीए भणइ–एरिसं एयंति १३, अणाभोगवत्तिया किरिया दुविहा–अणाभोगआदियणा य अणाभोगणिक्खेवणा य, अणाभोगो–अन्नाणं आदियणआ–गहणं निक्खिवणं–ठवणं, तं गहणं निक्खिवणं वा अणाभोगेण अपमज्जियाइ गिण्हइ निक्खिवइत्ति वा, अहवा अणाभोगकिरिया दुविहा–आयाणनिक्खिवणाभोगकिरिया य

१ जीवस्वाहस्तिकी यज्जीवेन जीव मारयति, अजीवस्वाहस्तिकी यथाऽस्यादिभि, अथवा जीवस्वाहस्तिकी यज्जीव स्वहस्तेन ताडयति, अजीवस्वाहस्तिकी अजीव स्वहस्तेन ताडयति वस्त्र पात्र वा, आज्ञापनी क्रिया द्विविधा–जीवाज्ञापनिकी अजीवाज्ञापनिकी च, जीवाज्ञापनी जीवमाज्ञापयति परेण अजीव वाऽऽज्ञापयति, विक्रीणानो द्विविधा, जीवविदारणिकी च अजीवविदारणिकी च, जीवविदारणिकी जीव विदारयति, एवमजीवमपि, अथवा जीवमजीव वा अभापिकेषु विक्रीणानो द्वैभाषिको वा विदारयति, प्रपञ्च विधत्ते इति भणित भवति, अथवा जीव विचारयति असद्भिर्गुणैरीदृशस्तादृशस्त्वमिति, अजीव वा विप्रतारणबुद्ध्या भणति–ईदृशमेतदिति, अनाभोगप्रत्ययिकी क्रिया द्विविधा–अनाभोगादानजा अनाभोगनिक्षेपजा च, अनाभोगोऽज्ञान आदान ग्रहण निक्षेपण स्थापन, तद् ग्रहण स्थापन वाऽनाभोगेनाप्रमार्जितादि गृह्णाति निक्षिपति वा, अथवा अनाभोगक्रिया द्विविधा–आदाननिक्षेपानाभोगक्रिया च

उक्कमणअणाभोगकिरिया य, तत्थादाणनिक्खिवणअणाभोगकिरिया रओहरणेण अपमज्जियाइ पत्तचीवराणं आदाणं णिक्खेवं वा करेइ, उक्कमणअणाभोगकिरिया लंघणपवणधावणअसमिक्खगमणागमणाइ १४, अणवकंखवत्तिया किरिया दुविहा–इहलोइयअणवकंखवत्तिया य परलोइयअणवकंखवत्तिया य, इहलोयअणवकंखवत्तिया लोयविरुद्धाइं चोरिक्काइंणि करेइ जेहिं वहबंधणाणि इह चेव पावेइ, परलोयअणवकंखवत्तिया हिंसाईणि कम्माणि करेमाणो परलोयं नावकंखइ १५, पओयकिरिया तिविहा पण्णत्ता तं०-मणप्पओयकिरिया वइप्पओयकिरिया कायप्पओयकिरिया य, तत्थ मणप्पओयकिरिया अट्टरुद्दज्झाई इन्द्रियप्रसृतौ अनियमियमण इति, वइप्पओगो–वायाजोगो जो तित्थगरेहिं सावज्जाई गरहिओ तं मेच्छाए भासइ, कायप्पओयकिरिया कायप्पमत्तस्स गमणागमणकुंचणपसारणाइचेट्ठा कायस्स १६, समुदाणकिरिया समग्गमुपादाणं समुदाणं, समुदाओ अट्ठ कम्माइं, तेसिं जाए उवायाणं कज्जइं सा समुदाणकिरिया, सा दुविहा–देसोवघाय-

१ उत्क्रमणानाभोगक्रिया च, तत्रादाननिक्षेपानाभोगक्रिया रजोहरणेनाप्रमार्ज्य पात्रचीवरादीनामादान निक्षेप वा करोति, उत्क्रमणानाभोगक्रिया लङ्घनप्लवनधावनासमीक्ष्यगमनागमनादि, अनवकाङ्क्षाप्रत्ययिकी क्रिया द्विविधा–ऐहलौकिकानवकाङ्क्षाप्रत्ययिकी च पारलौकिकानवकाङ्क्षाप्रत्ययिकी च, ऐहलौकिकानवकाङ्क्षाप्रत्ययिकी लोकविरुद्धानि चौर्यादीनि करोति यैर्वधबन्धनानि इहैव प्राप्नोति, परलोकानवकाङ्क्षाप्रत्ययिकी हिंसादीनि कर्माणि कुर्वन् परलोक नावकाङ्क्षते, प्रयोगक्रिया त्रिविधा प्रज्ञप्ता, तद्यथा–मन प्रयोगक्रिया वाक्प्रयोगक्रिया कायप्रयोगक्रिया च, तत्र मन प्रयोगक्रिया आर्त्तरौद्रध्यायीन्द्रियप्रसृतौ अनियमितमना इति, वाक्प्रयोग –वाग्योग यस्तीर्थकरै सावद्यादिर्गर्हितस्त स्वेच्छया भापते, कायप्रयोगक्रिया कायेन प्रमत्तस्य गमनागमनाकुञ्चनप्रसारणादि चेष्टा कायस्य, समुदानक्रिया समग्रमुपादान समुदान, समुदायोऽष्ट कर्माणि, तेपा ययोपादान क्रियते सा समुदानक्रिया, सा द्विविधा–देशोपघात–

समुदाणकिरिया सव्वोवघायसमुदाणकिरिया, तत्थ देसोवघाएण समुदाणकिरिया कज्जइ कोइ कस्सइ इंदियदेसोवघायं करेइ, सव्वोवघायसमुदाणकिरिया सव्वप्पयारेण इंदियविणासं करेइ १७, पेज्जवत्तिया पेम्म राग इत्यर्थः, सा दुविहा–मायानिस्सिया लोभनिस्सिया य, अहवा तं वयणं उदाहरइ जेण परस्स रागो भवइ १८, दोसवत्तिया अप्रीतिकारिका सा दुविहा–कोहनिस्सिया य माणनिस्सिया य, कोहनिस्सिया अप्पणा कुप्पइ, परस्स वा कोहमुप्पादेइ, माणणिस्सिया सयं पमज्जइ परस्स वा माणमुप्पाएइ, इरियावहिया किरिया दुविहा–कज्जमाणा वेइज्जमाणा य, सा अप्पमत्तसंजयस्स वीयरायछउमत्थस्स केवलिस्स वा आउत्तं गच्छमाणस्स आउत्तं चिट्ठमाणस्स आउत्तं निसीयमाणस्स आउत्तं तुयट्टमाणस्स आउत्तं भुंजमाणस्स आउत्तं भासमाणस्स आउत्तं वत्थं पडिग्गहं कंवलं पायपुंछणं गिण्हमाणस्स निक्खिवमाणस्स वा जाव चक्खुपम्हनिवायमवि सुहुमा किरिया इरियावहिया कज्जइ, सा पढमसमए बद्धा बिइयसमए वेइया सा बद्धा पुट्ठा वेइया निज्जिण्णा सेअकाले अकंमंसे यावि भवइ। एयाओ पंचवीस किरियाओ ॥

१ समुदानक्रिया सर्वोपघातसमुदानक्रिया, तत्र देशोपघातेन समुदानक्रिया क्रियते कश्चित् कस्यचिद् इन्द्रियदेशोपघात करोति, सर्वोपघातसमुदानक्रिया सर्वप्रकारेणेन्द्रियविनाश करोति, प्रेमप्रत्ययिकी–सा द्विविधा–मायानिश्रिता लोभनिश्रिता च, अथवा तद्वचनमुदाहरति येन परस्य रागो भवति, द्वेषप्रत्ययिकी सा द्विविधा–क्रोधनिश्रिता च माननिश्रिता च, क्रोधनिश्रिता आत्मना कुप्यति परस्य वा क्रोधमुत्पादयति, माननिश्रिता स्वय माद्यति परस्य वा मानमुत्पादयति, ईर्यापथिकी क्रिया द्विविधा–क्रियमाणा च वेद्यमाना च, सा अप्रमत्तसंयतस्य वीतरागच्छद्मस्थस्य केवलिनो वाऽऽयुक्त गच्छत आयुक्त तिष्ठत आयुक्त निषीदत आयुक्त त्वग्वर्त्तयत आयुक्त भुञ्जानस्यायुक्त भाषमाणस्यायुक्त वस्त्र पात्र कम्बल पादप्रोञ्छन गृह्णतो निक्षिपतो वा यावचक्षु पक्ष्मनिपातमपि ( कुर्वत ) सूक्ष्मा क्रिया ईर्यापथिकी क्रियते, सा प्रथमे समये बद्धा द्वितीयसमये वेदिता सा बद्धा स्पृष्टा वेदिता निर्जीर्णा एष्यत्काले अकर्मांशश्चापि भवति, एता पञ्चविंशति क्रिया

'पडिक्कमामि पंचहिं कामगुणेहिं-सद्देणं रूवेणं रसेणं गंधेणं फासेणं। पडिक्कमामि पंचहिं महव्वएहिं, -पाणाइवायाओ वेरमणं मुसावायाओ वेरमणं अदिण्णादाणाओ वेरमणं मेहुणाओ वेरमणं परिग्गहाओ वेरमणं। पडिक्कमामि पंचहिं समिईहिं-ईरियासमिइए भासासमिइए एसणासमिइए आयाणभंडमत्तनिक्खेवणासमिइए उच्चारपासवणखेलजल्लसिंघाणपारिट्ठावणियासमिइए ॥ सूत्रं ॥

प्रतिक्रमामि पञ्चभिः कामगुणैः, प्रतिषिद्धकरणादिना प्रकारेण हेतुभूतेन योऽतिचारः कृतः, तद्यथा-शब्देनेत्यादि, तत्र काम्यन्त इति कामाः-शब्दादयस्त एव स्वस्वरूपगुणबन्धहेतुत्वाद्गुणा इति, तथाहि-शब्दाद्यासक्तः कर्मणा बद्ध्यत इति भावना॥ प्रतिक्रमामि पञ्चभिर्महाव्रतैः करणभूतैर्योऽतिचारः कृतः, औदयिकभावगमनेन यत्खण्डनं कृतमित्यर्थः, कथं पुनः करणता महाव्रतानामतिचारं प्रति?, उच्यते, प्रतिषिद्धकरणादिनैव, किंविशिष्टानि पुनस्तानि?, तत्स्वरूपाभिधित्सयाऽऽह-प्राणातिपाताद्विरमणमित्यादीनि क्षुण्णत्वान्न विव्रियन्ते, प्रतिक्रमामि पञ्चभिः समितिभिः करणभूताभिर्योऽतिचारः कृतः, तद्यथा-ईर्यासमित्या भाषासमित्येत्यादि, तत्र संपूर्वस्य 'इण् गतौ' वित्यस्य क्तिन्प्रत्ययान्तस्य समितिर्भवति, सम्-एकीभावेनेतिः समितिः, शोभनैकाग्रपरिणामचेष्टेत्यर्थः, ईर्यायां समितिरीर्यासमितिस्तया, ईर्याविषये एकीभावेन चेष्टनमित्यर्थः, तथा च-ईर्यासमितिर्नाम रथशकटयानवाहनाक्रान्तेषु मार्गेषु सूर्यरश्मिप्रतापितेषु प्रासुकविविक्तेषु पथिषु युगमात्रदृष्टिना भूत्वा गमनागमनं कर्तव्यमिति, भाषणं भाषा तद्विषया समितिर्भाषासमितिस्तया, उक्तं च-"भाषासमितिर्नाम हितमितासन्दिग्धार्थभाषणं" एषणा गवेषणादिभेदा शङ्कादिलक्षणा वा तस्यां समितिरेषणासमितिस्तया, उक्तं च-"एषणासमितिर्नाम गोचरगतेन मुनिना सम्यगुपयुक्तेन नवकोटीपरिशुद्धं ग्राह्य'मिति, आदानभाण्डमात्रनिक्षेपणा समितिः, भाण्डमात्रे आदाननिक्षेपविषया समितिः सुन्दरचेष्टेत्यर्थः, तया, इह च सप्त भङ्गा भवन्ति-पत्ताइ[1] न पडिलेहइ ण पमज्जइ, चउभंगो, तत्थ चउत्थे चत्तारि गमा-दुप्पडिलेहियं दुप्पमज्जियं चउभंगो, आइल्ला छ अप्पसत्था, चरिमो पसत्थो, उच्चारप्रश्रवणखेलसिंघाणजल्लानां परिस्थापनिका तद्विषया समितिः सुन्दरचेष्टेत्यर्थः, तया, उच्चार-पुरीषं, प्रश्रवणं-मूत्रं, खेलः-श्लेष्मा, सिङ्घानं-नासिकोद्भवः श्लेष्मा, जल्लः-मलः, अत्रापि त एव सप्त भङ्गा इति, इह च उदाहरणानि, ईरियासमिईए उदाहरणं—

एगो[2] साहू ईरियासमिईए जुत्तो, सक्कस्स आसणं चलियं, सक्केण देवमज्झे पसंसिओ मिच्छादिट्ठी देवो असद्दहंतो आगओ मच्छियप्पमाणाओ मंडुक्कलियाओ विउव्वइ पच्छओ य हत्थी, गइं ण भिंदइ, हत्थिणा उक्खिविय पाडिओ, न सरीरं पेहइ, सत्ता मे मारिय'जीवदयापरिणओ। अहवा ईरियासमिईए अरहण्णओ, देवयाए पाओ छिण्णो, अण्णाए संधिओ॥

1 पात्रादि न प्रतिलिखति न प्रमार्जयति, चतुर्भङ्गिका, तत्र चतुर्थे चत्वारो गमा -दुष्प्रतिलेखित दुष्प्रमार्जित चतुर्भङ्गी, आद्याः षट् अप्रशस्ताः, चरम प्रशस्त, 2 एक साधुरीर्यासमित्या युक्त, शक्रस्यासन चलित, शक्रेण देवमध्ये प्रशंसित, मिथ्यादृष्टिर्देवोऽश्रद्दधान आगतो मक्षिकाप्रमाणा मण्डूकिका विकुर्वति पृष्ठतश्च हस्ती, गति न भिनत्ति, हस्तिनोत्क्षिप्य पातित., न शरीराय स्पृहयति, सत्त्वा मया मारिता इति जीवदयापरिणत ॥ अथवेर्यासमितावरहन्नक, देवतया पादश्छिन्न, अन्यया

भासासमिईए-साहू, भिक्खट्ठा नयररोहए कोइ निग्गंथो वाहिं कडए हिंडंतो केणइ पुट्ठो-केवइय आसहत्थी तह निचयो दारुधन्नमाईणं। णिव्विण्णाऽनिव्विण्णा नागरया बेंति मं समिओ ॥ १ ॥ बेइ ण जाणामोत्ति सज्झायझाणजोगवक्खित्ता। हिंडंता न वि पेच्छह? नवि सुणह किह हु तो बेंति॥ २ ॥-बहुं सुणेइ कण्णेहीत्यादि-वसुदेवपुव्वजम्मं आहरणं एसणाए समिईए। मगहा नंदिग्गामो गोयमधिज्जाइचक्कयरो ॥ १ ॥ तस्स य धारिणी भज्जा गब्भो तीए कयाइ आहूओ। धिज्जाइ मओ छम्मास गब्भ धिज्जाइणी जाए ॥ २ ॥ माउलसंवड्ढणकम्मकरणवेयारणा य लोएणं। नत्थि तुह एत्थ किंचिवि तो बेती माउलो तं च ॥ ३ ॥ मा सुण लोयस्स तुमं धूयाओ तिण्णि तेसि जेट्ठयरं। दाहामि करे कंमं पकओ पत्तो य वीवाहो ॥ ४ ॥ सा नेच्छई विसण्णो माउलओ बेइ बिइय दाहामि। सावि य तहेव निच्छइ तइयत्ती निच्छए सावि ॥ ५ ॥ निव्विण्णनंदिवद्धणआयरियाणं सगासि निक्खंतो। जाओ छट्ठक्खमओ गिण्हइयमभिग्गहमिमं तु ॥ ६ ॥

1 सहित ॥ भाषासमितौ-साधु, भिक्षार्थं नगररोधे कोऽपि निर्ग्रन्थो बहि कटके हिण्डमान केनचित् पृष्ट -कियन्तोऽश्वा हस्तिनस्तथा निचयो दारुधान्यादीनाम्। निर्विण्णा अनिर्विण्णा नागरका? ब्रुवत इद समिता ॥ १ ॥ब्रुवंति न जानाम इति स्वाध्यायध्यानयोगव्याक्षिप्ता। हिण्डमाना नैव प्रेक्षध्वे? नैव शृणुथ कथ नु? तदा ब्रुवंति ॥ २ ॥ बहु शृणोति कर्णाभ्यामित्यादि ॥ वसुदेवपूर्वजन्माहरण एषणाया समितौ। मगधेषु नन्दीग्रामो गौतमो धिग्जातीयश्चक्रचर ॥१॥ तस्य च धारिणीभार्या गर्भस्तस्या कदाचिज्जात। धिग्जातीयो मृतः षण्मासगर्भे धिग्जातीया जाते ॥ २ ॥ मातुलसवर्धन कर्मकरण विचारणा च लोकेन। नास्ति तवात्र किञ्चिदपि तदा ब्रवीति मातुलस्तं च ॥ ३ ॥ मा शृणु लोकस्य त्व दुहितरस्तिस्रस्तासां ज्येष्ठतरां। दास्यामि कुरु कर्म प्रकृत प्राप्तश्च विवाह ॥ ४ ॥ सा नेच्छति विषण्णो मातुलो ब्रवीति द्वितीयां दास्यामि। सापि च तथैव नेच्छति तृतीयेति नेच्छति सापि ॥ ५ ॥ निर्विण्णो नन्दिवर्धनाचार्याणां सकाशे निष्क्रान्त। जात षष्ठ क्षपको गृह्णाति चाभिग्रहमिम तु ॥ ६ ॥

वालगिलाणाईयं वेयावच्चं मए उ कायव्वं । तं कुणइ तिवसद्धो खायजसो सक्कगुणकित्ती ॥ ७ ॥ असद्दहेण देवस्स आगमो कुणइ दो समणरूवे । अतिसारगहियमेगो अडविठिओ अइगओ वीओ ॥ ८ ॥ वेति गिलाणो पडिओ वेयावच्चं तु सद्दहे जो उ । सो उट्ठेऊ खिप्पं सुयं च तं नंदिसेणेणं ॥ ९ ॥ छट्ठोववासपारणयमाणियं कवल घेत्तुकामेण । तं सुयमेत्तं रहसुट्ठिओ य भण केण कज्जंति ॥ १० ॥ पाणगदव्वं च तहिं जं णत्थि तेण वेइ कज्जं तु । निग्गय हिंडंतो कुणइ अणेसणं नविय पेलेइ ॥ ११ ॥ इय एक्कवारवितियं च हिंडिओ लद्ध ततियवारंमि । अणुकंपाए तुरंतो तओ गओ तस्सगासं तु ॥ १२ ॥ खरफरुसनिट्ठुरेहिं अक्कोसइ सो गिलाणओ रुट्ठो । हे मंदभग्ग ! फुक्किय तूससि तं नाममेत्तेणं ॥१३॥ साहुवगारित्ति अह समुद्दिसिउमाओ । एयाएऽवत्थाए तं अच्छसि भत्तलोभिल्लो ॥ १४ ॥ अमियमिव मण्णमाणो तं फरुसगिरं तु मो उ संभंतो । चलणगओ खामेइ धुवइ य तं असुइमललित्तं ॥१५॥ उट्ठेह वयामोत्ती तह काहामी जहा हु अचिरेणं ।

१ वालग्लानादीनां वैयावृत्त्यं मया कर्त्तव्यमेव । तत्करोति तीव्रश्रद्धः ख्यातयशाः शक्रगुणकीर्त्तिं ॥ ७ ॥ अश्रद्दधानेन देवस्यागमं करोति द्वे श्रमणरूपे । अतिसारगृहीत एकोऽटव्यां स्थितोऽतिगतो द्वितीय ॥८॥ ब्रवीति ग्लानः पतितो वैयावृत्त्यं तु श्रद्दधाति यस्तु । स उत्तिष्ठतु क्षिप्रं श्रुतं च तन्नन्दिषेणेन ॥९॥ षष्ठोपवासपारणकमानीतं कवलान् गृहीतुकामेन । तच्छ्रुतमात्रे रभसोत्थितश्च भण केन कार्यमिति ? ॥१०॥ पानकद्रव्यं च तत्र यन्नास्ति तेन ब्रवीति कार्यं तु । निर्गतो हिण्डमाने करोत्यनेषणां न च प्रेरयति ॥ ११ ॥ एवमेकवारं द्वितीयं च हिण्डितो लब्धं तृतीयवारे । अनुकम्पया त्वरयन् ततो गतस्तत्सकाशं तु ॥ १२ ॥ खरपरुषनिष्ठुरैराक्रोशति स ग्लानो रुष्टः । हे मन्दभाग्य ! वृथैव तुष्यसि त्वं नाममात्रेण ॥ १३ ॥ साधूपकार्यमहमिति नामाथ समुद्दिश्यायातः । एतस्यामवस्थायां त्वं तिष्ठसि भक्तलोलुप ॥ १४ ॥ अमृतमिव मन्यमानस्तां परुषगिरं तु स तु सम्भ्रान्तः । चरणगतः क्षमयति प्रक्षालयति च तमशुचिमकलितम् ॥ १५ ॥ उत्तिष्ठ व्रजाव इति तथा करिष्यामि यथाऽचिरेणैव ।

होहिह निरुआ तुब्भे वेती न वएमि गंतुं जे ॥ १६ ॥ आरुहया पिट्ठीए आरूढो ताहे तो पयारं च । परमासुइदुग्गंधं मुयई पट्ठीए फरुसं च ॥१७॥ वेइ गिरं धिम्मुंडिय !, वेगविघाओ कओत्ति दुक्खविओ । इय वहुविहमक्कोसइ पए पए सोऽवि भगवं तु ॥ १८ ॥ ण गणेई फरुसगिरं णयावि तं दुसइ तारिसं गंधं । चंदणमिव मण्णंतो मिच्छामिह दुकडं भणइ ॥ १९ ॥ चिंतेइ किह करेमी किह हु समाही हविज्ज साहुस्स ? । इय वहुविहप्पयारं नवि तिण्णो जाहे खोहेउं ॥ २० ॥ ताहे अभित्थुणंतो सुरो गओ आगओ य इयरो य । आलोएइ गुरूहि य धन्नोत्ति तओ अणुसट्ठो ॥ २१ ॥ जह तेणं नवि पेलिय एसण इय एसणाइ जइयव्वं । अहवावि इमं अण्णं आहरणं दिट्ठिवादीयं ॥ २२ ॥ जह केइ पंच संजय तण्हछुहकिलंत सुमहमद्धाणं । उत्तिणा वेयालिय पत्ता गामं च ते एगं ॥ २३ ॥ मग्गंति पाणगं ते लोगो य तहिं अणेसणं कुणई । न गहिय न लद्धमियरं कालगया तिसाभिभूया य ॥ २४ ॥ चउत्थीए उदाहरणं—आयरिएण साहू भणिओ—गामं वच्चामो,

१ भविष्यसि नीरोगस्त्वं ब्रवीति शक्नोमि न गन्तुं ॥ १६ ॥ आरोह पृष्ठौ आरूढस्तदा ततः प्रचारं ( विष्ठां ) च । परमाशुचिदुर्गन्धां मुञ्चति पृष्ठौ परुषां च ॥ १७ ॥ ब्रवीति गिरा धिग् मुण्डित ! वेगविघातः कृत इति दु खापितः । इति बहुविधमाक्रोशति पदे पदे सोऽपि भगवांस्तु ॥ १८ ॥ न गणयति परुषगिरं न चापि तं दूषयति तादृशं गन्धम् । चन्दनमिव मन्यमानो मिथ्या मे इह दुष्कृतं भणति ॥१९॥ चिन्तयति कथं कुर्वे कथं च समाधिर्भवेत् साधो ?। इति बहुविधप्रकारैर्नैव शक्तो यदा क्षोभयितुम् ॥ २० ॥ तदाऽभिष्टुवन् सुरो गत आगतश्चेतरश्च । आलोचयति गुरुभिश्च धन्य इति ततोऽनुशिष्टः ॥ २१ ॥ यथा तेन नैवोल्लङ्घितैषणैवमेषणाया यतितव्यं । अथवापीदमन्यदाहरणं दृष्टिवादिकम् ॥ २२ ॥ यथा केचित्पञ्च संयतास्तृष्णाक्षुधाभ्यां क्लिश्यन्तो सुमहान्तमध्वानम् । उत्तीर्णा विकाले च प्राप्ता ग्रामं च ते एकम् ॥ २३ ॥ मार्गयन्ति पानकं ते लोकश्च तत्रानेषणां करोति । न गृहीतं न लब्धमितरत् कालगतास्तृषाभिभूताश्च ॥ २४ ॥ चतुर्थ्यामुदाहरणं—आचार्येण साधुर्भणितः—ग्रामं व्रजामः,

उग्गाहिए संते केणइ कारणेण ठिया, एक्को एत्ताहे पडिलेहियाणित्ति काउं ठवेउमारद्धो, साहूहिं चोइओ भणइ—किमित्थ सप्पो अच्छइ ?, सन्निहियाए देवयाए सप्पो विउविओ, एस जहण्णओ समिओ, अण्णो तेणेव विहिणा पडिलेहित्ता ठवेइ, सो उक्कोसओ समिओ, एत्थ उदाहरणं—एक्कस्स आयरियस्स पंच सीससयाइं, तेसिमेगो सेट्ठिसुओ पव्वइओ, सो जो जो साहू एइ तस्स तस्स दंडगं निक्खिवइ, एवं तस्स उट्ठियस्स अन्नो एइ अन्नो जाइ, तहावि सो भगवं अतुरियं अचवलं उवरि हेट्ठा य पमज्जिय ठवेइ, एवं वहुएणवि कालेण न परितम्मइ—चरिमाए समिईए पण्णत्तमिणं तु वीयराएहिं । आहरणं धम्मरुई परिठावणसमिइउवउत्तो ॥ १ ॥ काइयसमाहिपरिट्ठावणे य गहिओ अभिग्गहो तेणं । सक्कप्पसंसा अस्सद्दहणे देवागमविउव्वे ॥ २ ॥ सुवहुं पिवीलियाओ वाहा जवावि काइयसमाही । अन्नो य उट्ठिओ हू साहू वेंती तओ गाढं ॥ ३ ॥ अहयं च काइयाओ वेइं अच्छसु परिट्ठवेमित्ति । निग्गए निसिरे जहियं पिवीलिया ओसरे तत्थ ॥ ४ ॥ साहू य

१ उद्ग्राहिते सति केनचित्कारणेन स्थिता, एकोऽधुना प्रतिलिखितानीतिकृत्वा स्थापयितुमारब्ध, साधुभिर्नोदितो भणति—किमत्र सर्पस्तिष्ठति ?, सन्निहितया देवतया सर्पो विकुर्वितः, एष जघन्यो समितः, अन्यस्तेनैव विधिना प्रतिलिख्य स्थापयति, स उत्कृष्टतः समितः, अत्रोदाहरणं—एकस्याचार्यस्य पञ्च शिष्यशतानि, तेष्वेकः श्रेष्ठिसुतः प्रव्रजितः, स यो य साधु आयाति तस्य तस्य दण्डकं निक्षिपति, एवं तस्मिन्नुत्थितेऽन्य आयाति अन्यो याति, तथापि स भगवान् अत्वरितमचपलमुपर्यधस्ताच्च प्रमृज्य स्थापयति, एवं बहुनापि कालेन न परिताम्यति । चरमायां समितौ प्रज्ञप्तमिदं तु वीतरागैः । आहरणं धर्मरुचिः पारिष्ठापनिकीसमित्युपयुक्तः ॥ १ ॥ कायिकीसमाधिपारिष्ठापनिकायां च गृहीतोऽभिग्रहस्तेन । शक्रप्रशंसा अश्रद्धाने देवागमो विकुर्वति ॥ २ ॥ सुबहवः पीपीलिका बाधा जवादपि कायिकीसमाधेः । अन्य उत्थितः साधुर्ब्रवीति ततो गाढम् ॥ ३ ॥ अहं च कायिकयाऽऽर्त्तो ब्रवीति तिष्ठ परिष्ठापयामीति । निर्गतो व्युत्सृजति यत्र पिपीलिका अवसर्पन्ति तत्र ॥ ४ ॥ साधुश्च

किलामिज्जइ पविए ता वारिओ य देवेणं । सामाइए निसिद्धो मा पिय देवो य आउट्टो ॥ ५ ॥ वंदित्तु गओ वितियं तु दिट्ठिवाइयं खुड्डए उ एक्को । तेण ण पेहिय थंडिल काइया लोभओ राओ ॥ ६ ॥ थंडिलं न पेहियंती न वोसिरे देवयाए उज्जोओ । अणुकंपाएँ कओ से दिट्ठा भूमित्ति वोसिरियं ॥ ७ ॥ एसो समिओ भणिओ अण्णो पुण असमिओ इमो भणिओ । सो काइयभोमाई एक्केक्कं नवरि पडिलेहे ॥ ८ ॥ नवि तिण्णि तिण्णि पेहे वेइ किमित्थं निविट्ठो होज्जुट्टो । काऊण उट्टरूवं च निविट्ठा देवया तत्थ ॥ ९ ॥ सो उट्ठिओ य राओ तत्थ गओ नवरि पेच्छए उट्टं । वितियं च गओ तत्थवि ततियंपि य तत्थवि णिविट्ठो ॥ १० ॥ तो अण्णो उट्ठविओ तेसुंपि तहेव देवया भणिओ । कीस न वि सत्तवीसं पेहेसी ? सम्मं पडिवण्णो ॥ ११ ॥ उच्चाराई एसा परिट्ठावण वण्णिया समासेणं । वेइ किमेत्तियं चिय परिट्ठप्पमुआहु अण्णंपि ? ॥ १२ ॥ भण्णइ अण्णंपत्थी किह तं किह वा परिट्ठवेयव्वं । संबंधेणेएणं परिठावणिज्जुत्तिमायाया ॥ १३ ॥

---

१ क्लाम्यते प्रपीतवान् तदा वारितश्च देवेन । सामायिके निषिद्धो मा पा देवश्चावर्जित ॥ ५ ॥ वन्दित्वा गत द्वितीय दृष्टिवादिक क्षुल्लकस्त्वेक । तेन न प्रेक्षित कायिकीस्थण्डिल लोभतो रात्रौ ॥ ६ ॥ स्थण्डिल न प्रेक्षितमिति न व्युत्सृजति देवतयोद्योत । अनुकम्पया कृत तस्य दृष्टा भूमिरिति व्युत्सृष्टम् ॥ ७ ॥ एष समितो भणितोऽन्य पुनरसमितोऽय भणित । स कायिकभूम्यादि एकैक पर प्रतिलिखति ॥ ८ ॥ नैव त्रीणि त्रीणि प्रत्युपेक्षते ब्रवीति किमिदो-पविष्टो भवेदुष्ट्र ? । कृत्वोष्ट्ररूप चोपविष्टा देवता तत्र ॥ ९ ॥ स उत्थितश्च रात्रौ तत्र गत पर प्रेक्षते उष्ट्रम् । द्वितीय च गतस्तत्रापि तृतीयमपि तत्राप्युपविष्ट. ॥ १० ॥ ततोऽन्य उत्थापितस्तेष्वपि तथैव देवतया भणित । कथ नैव सप्तविंशतिं प्रत्युपेक्षसे ? सम्यक् प्रतिपन्न ॥ ११ ॥ उच्चारादीनामेषा पारिष्ठापनिकी वर्णिता समासेन । ब्रवीति किमेतावदेव पारिष्ठाप्यमुताहो अन्यदपि ॥ १२ ॥ भण्यतेऽन्यदप्यस्ति कथ तत् क वा परिष्ठापयितव्यम् ? । सबन्धेनैतेन पारिष्ठापनिकी निर्युक्तिरायाता ॥ १३ ॥

पारिट्ठावणियविहिं वोच्छामि धीरपुरिसपण्णत्त । ज णाऊण सुविहिया पवयणसार उवलहंति ॥ १ ॥

व्याख्या—परितः–सर्वैः प्रकारैः स्थापनं परिस्थापनम्–अपुनर्ग्रहणतया न्यास इत्यर्थः, तेन निर्वृत्ता पारिस्थापनिकी तस्या विधिः–प्रकार. पारिस्थापनिकाविधिस्तं 'वक्ष्ये' अभिधास्ये, किं स्वबुद्ध्योत्प्रेक्ष्य ?, नेत्याह–'धीरपुरुषप्रज्ञप्तम्' अर्थसूत्राभ्यां तीर्थकरगणधरप्ररूपितमित्यर्थः, तत्रैकान्ततो वीर्यान्तरायापगमाद्धीरपुरुषः–तीर्थकरो गणधरस्तु धी'–बुद्धिस्तया विराजत इति धीरः । आह–यद्ययं पारिस्थापनिकाविधिर्धीरपुरुषाभ्यां प्ररूपित एव किमर्थं प्रतिपाद्यत इत्युच्यते–धीरपुरुषाभ्यां प्रपञ्चेन प्रज्ञप्तः स एव संक्षेपरुचिसत्त्वानुग्रहायेह सङ्क्षेपेणोच्यत इत्यदोषः, किंविशिष्टं विधिमत आह–यं 'ज्ञात्वा' विज्ञाय 'सुविहिताः' शोभनं विहितम्–अनुष्ठानं येषां ते सुविहिताः, साधव इत्यर्थः, कि ?–प्रवचनस्य सारः प्रवचनसन्दोहस्तम् 'उपलभन्ति' जानन्तीत्यर्थः ॥ सा पुनः पारिस्थापनिक्योघतः एकेन्द्रियनोएकेन्द्रियपरिस्थाप्यवस्तुभेदेन द्विधा भवति, आह—

एगिंदियनोएगिंदियपरिट्ठावणिया समासओ दुविहा । एएसिं तु पयाण पत्तेय परूवणं वोच्छ ॥ २ ॥

व्याख्या—एकेन्द्रियाः–पृथिव्यादयः, नोएकेन्द्रियाः–त्रसादयस्तेषां पारिस्थापनिकी–एकेन्द्रियनोएकेन्द्रियपारिस्थापनिकी, 'समासतः' संक्षेपेण 'द्विधा' द्विप्रकारा प्रज्ञप्तोक्तेनैव प्रकारेण, 'एएसिं तु पयाणं पत्तेय परूवणं वोच्छं' अनयोः पदयोरेकेन्द्रियनोएकेन्द्रियलक्षणयोः 'प्रत्येकं' पृथक् पृथक् 'प्ररूपणा' स्वरूपकथनां वक्ष्ये–अभिधास्य इति गाथार्थः ॥ २ ॥ तत्रैकेन्द्रियपारिस्थापनिकीप्रतिपिपादयिषया तत्स्वरूपमेवादौ प्रतिपादयन्नाह—

पुढवी आउक्काए तेऊ वाऊ वणस्सई चेव । एगिंदिय पचविहा तज्जाय तहा य अतज्जाय ॥ ३ ॥

व्याख्या—पृथिव्यप्कायस्तेजो वायुर्वनस्पतिश्चैव एवमेकेन्द्रियाः पञ्चविधाः, एकं त्वगिन्द्रियं येषां ते एकेन्द्रियाः 'पञ्चविधाः' पञ्चप्रकाराः, एतेषां चैकेन्द्रियाणां पारिस्थापनिकी द्विविधा भवति, कथमित्याह–'तज्जाय तहा य अतज्जाय' तज्जातपारिस्थापनिकी अतज्जातपारिस्थापनिकी च, अनयोर्भावार्थमुपरिष्टाद्वक्ष्यतीति गाथार्थः ॥ ३ ॥ आह–सति ग्रहणसम्भवेऽतिरिक्तस्य परिस्थापनं भवति, तत्र पृथिव्यादीनां कथं ग्रहणमित्यत आह—

दुविह च होइ गहण आयसमुत्थ च परसमुत्थ च । एक्केक्कपि य दुविह आभोगे तह अणाभोगे ॥ ४ ॥

व्याख्या—'द्विविधं तु' द्विप्रकारं च भवति 'ग्रहणं' पृथिव्यादीनां, कथम् ?–'आत्मसमुत्थं च परसमुत्थं च' आत्मसमुत्थं च स्वयमेव गृह्णतः परसमुत्थं परस्माद्गृह्णतः, पुनरेकैकमपि द्विविधं भवति, कथमित्याह–'आभोए तह अणाभोए' आभोगनम् आभोगः, उपयोगविशेष इत्यर्थः, तस्मिन्नाभोगे सति, तथाऽनाभोगे, अनुपयोग इत्यर्थः, अयं गाथाक्षरार्थः ॥ ४ ॥ अयं पुनर्भावार्थो वर्तते–तत्थ ताव आयसमुत्थं कहं च आभोएण होज्ज ?, साहू अहिणा खइओ विसं वा खइयं विसप्फोडिया वा उट्ठिया, तत्थ जो अचित्तो पुढविकाओ केणइ आणिओ सो मग्गिज्जइ, णत्थि आणिल्लओ, ताहे अप्पणावि आणिज्जइ, तत्थवि ण होज्ज अचित्तो ताहे मीसो, अंतो हलखणणकुड्डमाईसु आणिज्जइ, ण होज्ज ताहे अडवीओ पंथे वंमिए वा दवदड्ढए वा, ण होज्ज पच्छा सचित्तोवि घेप्पइ, आसुकारी वा कज्जं होज्जा जो लद्धो सो आणिज्जइ, एवं

---

१ तत्र तावदात्मसमुत्थ कथ चाभोगेन भवेत् ?, साधुरहिना दष्टो विष वा खादित विषस्फोटिका वोत्थिता, तत्र योऽचित्तः पृथ्वीकाय केनचिदानीत स मार्ग्यते, नास्त्यानीतस्तदाऽऽत्मनाऽप्यानीयते, तत्रापि न भवेदचित्तस्तदा मिश्रः, अन्तशो हलखननकुड्यादिभ्य आनीयते, न भवेत्तदाऽटवीत पथि वल्मीकात् दग्धाद्वा, न भवेद् पश्चात्सचित्तोऽपि गृह्यते, आशुकारि वा कार्यं भवेत् यो लब्ध' स आनीयते, एव

पाइंति नरएसु ॥ ११ ॥ तडतडतडस्स भुंजति भज्जणे कलंबुवालुयापट्ठे । वालुयगा नेरइया लोलेंति अंबरतलंमि ॥ १२ ॥ वसपूयरुहिरकेसट्ठिवाहिणी कलकलंतजउसोत्तं । वेयरणिनिरयपाला नेरइए ऊ पवाहंति ॥ १३ ॥ कप्पंति करगतेहिं कप्पंति परोप्परं परसुएहिं । संवलियमारुहंती खरस्सरा तत्थ नेरइए ॥ १४ ॥ भीए य पलायंते समंतओ तत्थ ते निरुंभंति । पसुणो जहा पसुवहे महघोसा तत्थ नेरइए ॥ १५ ॥ षोडशभिर्गाथाषोडशैः सूत्रकृताङ्गाद्यश्रुतस्कन्धाध्ययनैरित्यर्थः, क्रिया पूर्ववत्, तानि पुनरमून्यध्ययनानि—

समयो वेयालीयं उवसग्गपरिण्णथीपरिण्णा य । निरयविभत्तीवीरत्थओ य कुसीलाणं परिहासा ॥ १ ॥
वीरियधम्मसमाही मंगसमोसरण अहतह गंथो । जमईयं तह गाहासोलसमं होइ अज्झयणं ॥ २ ॥

गाथाद्वयं निगदसिद्धमेव,

सप्तदशविधे संयमे, सप्तदशविधे—सप्तदशप्रकारे संयमे सति, तद्विषयो वा प्रतिषिद्धकरणादिना प्रकारेण योऽतिचारः कृत इति, क्रियायोजना पूर्ववत्, सप्तदशविधसंयमप्रतिपादनायाह—

१ पाचयन्ति नरकेषु ॥ ११ ॥ तडतडतडत्कुर्वन्तो भृज्जन्ति भ्राष्टे कदम्बवालुकापृष्ठे । वालुका नैरयिकपाला लोलयन्त्यम्बरतले ॥ १२ ॥ वसापूयरुधिरकेशास्थिवाहिनीं कलकलज्जलश्रोतसम् । वैतरणीनरकपाला नैरयिकांस्तु प्रवाहयन्ति ॥ १३ ॥ कल्पन्ते क्रकचैः कल्पयन्ति परस्परं परशुभिः । शाल्मलीमारोहयन्ति खरस्वरास्तत्र नैरयिकान् ॥ १४ ॥ भीतांश्च पलायमानान् समन्ततस्तत्र तान्निरुन्धन्ति । पशून् यथा पशुवधे महाघोषास्तत्र नैरयिकान् ॥ १५ ॥

पुढविदगअगणिमारुयवणस्सइ बितिचउपणिदिअज्जीवो । पेहुप्पेहपमज्जणपरिट्ठवणमणोवईकाए ॥ १ ॥

व्याख्या—पुढवाइयाण जाव य पंचेंदियसंजमो भवे तेसिं । संघट्टणाइ न करे तिविहेणं करणजोएणं ॥ १ ॥ अजीवेहिवि जेहिं गहिएहिं असंजमो हवइ जइणो । जह पोत्थदूसपणए तणपणए चम्मपणए य ॥ २ ॥ गंडी कच्छवि मुट्ठी संपुडफलए तहा छिवाडी य । एयं पोत्थयपणयं पण्णत्तं वीयराएहिं ॥ ३ ॥ बाहल्लपुहुत्तेहिं गंडीपोत्थो उ तुल्लगो दीहो । कच्छवि अंते तणुओ मज्झे पिहुलो मुणेयव्वो ॥ ४ ॥ चउरंगुलदीहो वा वट्टागिइ मुट्ठिपोत्थओ अहवा । चउरंगुलदीहोच्चिय चउरस्सो वावि विण्णेओ ॥ ५ ॥ संपुडओ दुगमाई फलगावोच्छं छिवाडिमेत्ताहे । तणुपत्तूसियरूवो होइ छिवाडी बुहा बेंति ॥ ६ ॥ दीहो वा हस्सो वा जो पिहुलो होइ अप्पबाहुल्ले । तं मुणियसमयसारा छिवाडिपोत्थं भणंतीह ॥ ७ ॥ दुविहं च दूसपणयं समासओ तंपि होइ नायव्वं । अप्पडिलेहियपणयं दुप्पडिलेहं च विण्णेयं ॥ ८ ॥ अप्पडिलेहियदूसे

१ पृथ्व्यादयो यावच्च पञ्चेन्द्रियाः संयमो भवेत्तेषाम् । संघट्टनादि न करोति त्रिविधेन करणयोगेन ॥ १ ॥ अजीवेष्वपि येषु गृहीतेषु असंयमो भवति यतेः । यथा पुस्तकदूष्यपञ्चके तृणपञ्चके चर्मपञ्चके च ॥ २ ॥ गण्डी कच्छपी मुष्टिः संपुटफलकस्तथा सृपाटिका च । एतत् पुस्तकपञ्चकं प्रज्ञप्तं वीतरागैः ॥ ३ ॥ बाहल्यपृथक्त्वैर्गण्डीपुस्तकं तु तुल्यं दीर्घम् । कच्छपी अन्ते तनुकं मध्ये पृथु मुणितव्यम् ॥ ४ ॥ चतुरङ्गुलं दीर्घं वा वृत्ताकृति मुष्टिपुस्तकमथवा । चतुरङ्गुलदीर्घमेव चतुरस्रं वाऽपि विज्ञेयं ॥ ५ ॥ संपुटं फलकानि द्विकादीनि वक्ष्ये सृपाटिकामधुना । तनुपत्रोच्छ्रितरूपं भवति सृपाटिका बुधा ब्रुवते ॥ ६ ॥ दीर्घो वा ह्रस्वो वा यः पृथुर्भवत्यल्पबाहल्यः । तं ज्ञातसमयसाराः सृपाटिकापुस्तकं भणन्तीह ॥ ७ ॥ द्विविधं च दूष्यपञ्चकं समासतस्तदपि भवति ज्ञातव्यम् । अप्रतिलेखितपञ्चकं दुष्प्रतिलेखं च विज्ञेयम् ॥ ८ ॥ अप्रतिलेखितदूष्यपञ्चके

तूली उवहाणगं च नायव्वं । गंडुवहाणालिंगणि मसूरए चेव पोत्तमए ॥ ९ ॥ पल्हवि कोयवि पावार णवयए तहा य दाढिगालीओ । दुप्पडिलेहियदूसे एयं वीयं भवे पणयं ॥ १० ॥ पल्हवि हत्थुत्थरणं कोयवओ रूयपूरिओ पडओ । दढिगालि धोयपोत्ती सेस पसिद्धा भवे भेया ॥ ११ ॥ तणपणयं पुण भणियं जिणेहि जियरायदोसमोहेहिं । साली वीही कोद्दवरालग रण्णेतणाइं च ॥ १२ ॥ अयएलगाविमहिसी मिगाणमइणंच पंचमं होइ । तलिगा खल्लग वज्झे कोसग कत्ती य वीयं तु ॥ १३ ॥ अह वियडहिरन्नाई ताइ न गिण्हइ असंजमो साहू । ठाणाइ जत्थ चेते पेहपमज्जित्तु तत्थ करे ॥ १४ ॥ एसा पेहुवपेहा पुणो य दुविहा उ होइ नायव्वा । वावारावावारे वावारे जह उ गामस्स ॥ १५ ॥ एसो उविक्खगो हू अव्वावारे जहा विणस्संतं । किं एयं नु उवेक्खसि दुविहाए वेत्थ अहिगारो ॥ १६ ॥ वावारुवेक्ख तहियं संभोइय सीयमाण चोएइ । चोएई इयरंपी पावयणीयंमि कज्जंमि ॥ १७ ॥ अवावार उवेक्खा नवि चोएइ गिहिं तु सीयंतं । कम्मेसुं

१ तूली उपधानकं च ज्ञातव्यम् । गण्डोपधानमालिङ्गिनी मसूरकश्चैव पोतमयः ॥ ९ ॥ पल्हवी ( प्रल्हत्ति ) कौतपी प्रावारो नवत्वकं तथा दढ्रागाल्यौ तु । दुष्प्रतिलिखितदूष्ये एतद् द्वितीयं भवेत् पञ्चकम् ॥ १० ॥ पल्हवी हस्तास्तरणं कौतपो रुतपूरितः पटः । दढ्रागाली धौतपोतः शेषाः प्रसिद्धा भवेता भेदाः ॥ ११ ॥ तृणपञ्चकं पुनर्भणितं जिनैर्जितरागद्वेषमोहैः । शालिर्व्रीहिः कोद्रवः रालकोऽरण्यतृणानि च ॥ १२ ॥ अजैडकगोमहिषाणां मृगाणामजिनं च पञ्चमं भवति । तलिका खल्लको वर्धः कोशः कर्त्तरी च द्वितीयं तु ॥ १३ ॥ अथ हिरण्यविकटादीनि ( अजीवाः ) तानि न गृह्णाति असंयम (त्वात्) साधुः । स्थानादि यत्र चिकीर्षेत् प्रेक्ष्य प्रमाज्यं तत्र कुर्यात् ॥ १४ ॥ एषा प्रेक्षा उपेक्षा पुनर्द्विविधा तु भवति ज्ञातव्या । व्यापारेऽव्यापारे व्यापारे यथैव ( इन्द्रिय ) ग्रामस्य ॥ १५ ॥ एष उपेक्षकः अव्यापारे यथा विनश्यत् । किमेतत्नूपेक्षसे द्विविधयाऽप्यत्राधिकारः ॥१६॥ व्यापारोपेक्षा तत्र साम्भोगिकान् सीदतश्चोदयति । चोदयति इतरमपि प्रावचनीये कार्ये ॥ १७ ॥ अव्यापारोपेक्षा नैव चोदयति गृहिणं तु सीदन्तम् । कर्मसु

बहुविहेसुं संजम एसो उवेक्खाए ॥ १८ ॥ पाए सागारिएसुं अपमज्जित्तावि संजमो होइ । ते चेव पमज्जंते असागारिए संजमो होइ ॥ १९ ॥ पाणेहिं संसत्तं भत्तं पाणमहवावि अविसुद्धं । उवगरणपत्तमाई जं वा अइरित्त होज्जाहि ॥ २० ॥ तं परिठवणविहीए अवहट्टु संजमो भवे एसो । अकुसलमणवइरोहे कुसलाण उदीरणं जं तु ॥ २१ ॥ मणवइसंजम एसो काए पुण जं अवस्सकज्जंमि । गमणागमणं भवई तओवउत्तो कुणइ संमं ॥ २२ ॥ तव्वज्जं कुम्मस्सव सुसमाहियपाणिपायकायस्स । हवई य कायसंजमो चिट्ठंतस्सेव साहुस्स ॥ २३ ॥ अष्टादशप्रकारे अब्रह्मणि—अब्रह्मचर्ये सति तद्विषयो वा प्रतिषिद्धकरणादिना प्रकारेण योऽतिचारः कृत इति, क्रिया पूर्ववत्, तत्राष्टादशविधाब्रह्मप्रतिपादनायाह सङ्ग्रहणिकारः—

ओरालियं च दिव्वं मणवइकाएण करणजोएणं । अणुमोयणकारवणे करणेणऽट्ठारसाबंभं ॥ १ ॥

व्याख्या—इह मूलतो द्विधाऽब्रह्म भवति—औदारिकं तिर्यग्मनुष्याणां दिव्यं च भवनवास्यादीनां, चशब्दस्य व्यवहितः सम्बन्धः, मनोवाक्कायाः करणं त्रिधा, योगेन त्रिविधेनैवानुमोदनकारापणकरणेन निरूपितं, पश्चानुपूर्व्योपन्यासः,

---

१ बहुविधेषु संयम एष उपेक्षाया ॥ १८ ॥ पादौ सागारिकेषु अप्रमाऽर्ज्योपि ( अप्रमृज्यापि ) संयमो भवति । तावेव प्रमार्जयति असागारिके संयमो भवति ॥ १९ ॥ प्राणिभिः संसक्तं भक्तं पानमथवाऽप्यविशुद्धम् । उपकरणपात्रादि यद्वाऽतिरिक्तं भवेत् ॥ २० ॥ तत् परिष्ठापनविधिनाऽपहृत्यसंयमो भवेदेष । अकुशलमनोवाचोरोधे कुशलयोरुदीरणं यत्तु ॥ २१ ॥ मनोवाक्संयमावेतौ काये पुनर्यदवश्यकार्ये । गमनागमनं भवति तदुपयुक्तः करोति सम्यक् ॥ २२ ॥ तद्वर्जं कूर्मस्येव सुसमाहितपाणिपादकायस्य । भवति च कायसंयमस्तिष्ठत एव साधोः ॥ २३ ॥

अब्रह्माष्टादशविधं भवति, इयं भावना—औदारिकं स्वयं न करोति मनसा ३, नान्येन कारयति मनसा ३, कुर्वन्तं नानुमोदते मनसा ३, एवं वैक्रियमपि । प्राकृतशैल्या छान्दसत्वाच्चैकोनविंशतिभिर्ज्ञाताध्ययनैरिति वेदितव्यं, पाठान्तरं वा—'एगूणवीसाहिं णायज्झयणेहिंति' एवमन्यत्रापि द्रष्टव्यं, क्रिया पूर्ववत्, ज्ञाताध्ययनानि ज्ञाताधर्मकथान्तर्वर्तीनि, तान्येकोनविंशति अभिधानतः प्रतिपादयन्नाह सङ्ग्रहणिकारः

उक्खित्तणाए संघाडे, अंडे कुम्मे य सेलए । तुंबे य रोहिणी मल्ली, मागंदी चंदिमा इय ॥ १ ॥

दावद्दवे उदगणाए, मंडुक्के तेयली इय । नंदिफले अवरकंका, आइन्ने सुंसुमा पुंडरीया ॥ २ ॥

गाथाद्वयं निगदसिद्धं, । विंशतिभिरसमाधिस्थानैः, क्रिया प्राग्वदेव, तानि चामूनि—दवदवचारऽपमज्जिय दुपमज्जियेऽइरित्तसिज्जआसणिए । राइणियपरिभासिय थेरउवघाई य ॥ १ ॥ संजलणकोहणो पिट्ठिमंसिए-ऽभिक्खऽभिक्खमोहारी । अहिकरणकरोईरणं अकालसज्झायकारी या ॥ २ ॥ ससरक्खपाणिपाए सद्दकरो कलहझंझकारी य । सूरप्पमाणभोती वीसइमे एसणाऽसमिए ॥ ३ ॥ गाथात्रयम्, अस्य व्याख्या—समाधानं समाधिः—चेतसः स्वास्थ्यं मोक्षमार्गेऽवस्थितिरित्यर्थः, न समाधिरसमाधिस्तस्य स्थानानि—आश्रया भेदाः पर्याया असमाधिस्थानान्युच्यन्ते, दवदवचारि दुयं दुयं निरवेक्खो वच्चंतो इहेव अप्पाणं पडणादिणा असमाहीए जोएइ, अन्ने य सत्ते बाधंते

---

१ द्रुतद्रुतचारी द्रुत द्रुत निरपेक्षो व्रजन् इहैवात्मान पतनादिनाऽसमाधिना योजयति अन्यांश्च सत्त्वान् बाधयमानान्

असमाहीए जोएइ, सत्तवहजणिएण य कम्मुणा परलोएवि अप्पाणं असमाहीए जोएइ, अतो द्रुत २ गन्तृत्वमसमाधिकारणत्वादसमाधिस्थानम्, एवमन्यत्रापि यथायोगं स्वबुद्ध्याऽक्षरगमनिका कार्येति, अपमज्जिए ठाणे निसीयणतुयट्टणाइ आयरंतो अप्पाणं विच्छुगडंकादिणा सत्ते य संघट्टणादिणा असमाहीए जोएइ, एवं दुपमज्जिएवि आयरंतो, अइरित्ते सेज्जाआसणिएत्ति अइरित्ताए सेज्जाए घंघसालाए अण्णेवि आवासेंति अहिगरणाइणा अप्पाणं परे य असमाहीए जोएइ आसणं—पीढफलगाइ तंपि अइरित्तमसमाहीए जोएइ, रायणियपरिभासी राइणिओ—आयरिओ अण्णो वा जो महल्लो जाइसुयपरियायादीहिं तस्स परिभासी परिभवकारी असुद्धचित्तत्तणओ अप्पाणं परे य असमाहीए जोयइ, थेरोवघाई थेरा—आयरिया गुरवो ते आयारदोसेण सीलदोसेण य णाणाईहिं उवहणति, उवहणंतो दुट्ठचित्तत्तणओ अप्पाणमण्णे य असमाहीए जोएइ, भूयाणि एगिंदिया ते अणट्ठाए उवहणइ उवहणंतो असमाहीए जोएइ, संजलणोत्ति मुहुत्ते २ रूसइ

---

१ असमाधिना योजयति, सत्त्ववधजनितेन च कर्मणा परलोकेऽपि आत्मानमसमाधिना योजयति १, अप्रमार्जिते स्थाने निषीदनत्वग्वर्तनाद्याचरन् आत्मानं वृश्चिकदंशादिना सत्त्वांश्च संघट्टनादिनाऽसमाधिना योजयति २, एवं दुष्प्रमार्जितेऽप्याचरन् ३, अतिरिक्तशय्यासनिक इति अतिरिक्तायां शय्यायां घङ्ग-( बृहत् ) शालायां अन्येऽप्यावासयन्ति अधिकरणादिनाऽऽत्मानं परांश्चासमाधिना योजयति, आसनं—पीठफलकादि तदप्यतिरिक्तमसमाधिना योजयति ४, रात्निकपरिभाषी रात्निकः—आचार्यः अन्यो वा यो महान् जातिश्रुतपर्यायादिभिः तस्य परिभाषी—पराभवकारी अशुद्धचित्तत्वात् आत्मानं परांश्चासमाधिना योजयति ५, स्थविरोपघाती स्थविराः—आचार्याः गुरवः तान् आचारदोषेण शीलदोषेण च ज्ञानादिभिरुपहन्ति, उपघ्नन् दुष्टचित्तत्वादात्मानं परांश्च असमाधिना योजयति ६, भूताः एकेन्द्रियाः तान् अनर्थायोपहन्ति उपघ्नन् असमाधिना योजयति, संज्वलन इति मुहूर्ते २ रुष्यति

रूसंतो अप्पाणमण्णे य असमाहीए जोएइ, कोहणोत्ति सइ कुद्धो अच्चंतकुद्धो भवइ, सो य परमप्पाणं च असमाहीए जोएइ, एवं क्रिया वक्तव्या, पिट्ठिमंसिएत्ति परंमुहस्स अवण्णं भणइ, अभिक्खभिक्खमोहारीति अभिक्खणमोहारिणीं भासं भासइ जहा दासो तुमं चोरो वत्ति जं वा संकियं तं निस्संकियं भणइ एवं चेवत्ति, अहिगरणकरोदीरण अहिगरणाइं करेति अण्णेसिं कलहेइत्ति भणियं होति यन्त्रादीनि वा उदीरति, उवसंताणि पुणो उदीरेति, अकालसज्झायकारी य कालियसुयं उग्घाडापोरिसीए पढइ, पंतदेवया असमाहीए जोएइ, ससरक्खपाणिपाओ भवइ ससरक्खपाणिपाए मह स-रक्खेण ससरक्खे अथंडिला थंडिलं संकमंतो न पमज्जइ थंडिलाओवि अथंडिलं कण्हभोमाइसु विभासा ससरक्खपाणिपाए ससरक्खेहिं हत्थेहिं भिक्खं गेण्हइ अहवा अणंतरहियाए पुढवीए निसीयणाइ करेंतो ससरक्खपाणिपाओ भवति, सद्दं करेइ असंखडबोलं करेइ विगालेवि महया सद्देण उ वएइ वेरत्तियं वा गारत्थियं भासं भासइ, कलहकरेत्ति अप्पणा कलहं करेइ

---

१ रुष्यन् आत्मानमन्यांश्चासमाधिना योजयति ८, क्रोधन इति सकृत् क्रुद्धः अत्यन्तक्रुद्धो भवति, स च परमात्मानं चासमाधिना योजयति९, पृष्ठमांसाद इति पराङ्मुखस्यावर्णं भणति१०,अभीक्ष्णमभीक्ष्णमवधारक इति अभीक्ष्णमवधारिणीं भाषां भाषते यथा दासस्त्वं चौरो वेति यद्वा शङ्कितं तत् निःशङ्कितं भणति एवमेवेति११, अधिकरणकर उदीरक अधिकरणानि करोति अन्येषां कलहयतीति भणितं भवति, यन्त्रादीनि वोदीरयति, उपशान्तानि पुनरुदीरयति १२-१३,अकालस्वाध्यायकारी च कालिकश्रुतं चोद्घाटपौरुष्यां पठति, प्रान्तदेवताऽसमाधिना योजयेत् १४, सरजस्कपाणिपादो भवति सरजस्कपाणिपाद महरजसा सरजस्क अस्थण्डिलात् स्थण्डिलं संक्रामन् न प्रमार्जयति स्थण्डिलादपि अस्थण्डिलं कृष्णभूमादिषु विभाषा ससरजस्कपाणिपाद ससरजस्काभ्यां हस्ताभ्यां भिक्षां गृह्णाति अथवाऽनन्तर्हितायां पृथ्व्यां निषीदनादि कुर्वन् ससरजस्कपाणिपादो भवति १५, शब्दं करोति–कलहबोलं करोति विकालेऽपि महता शब्देनैव वदति वैरात्रिकं वा गार्हस्थ्यभाषां भाषते १६, कलहकर इति आत्मना कलहं करोति

तं करेइ जेण कलहो भवइ, झंझकारी य जेण २ गणस्स भेओ भवइ सव्वो वा गणो झंझविओ अच्छइ तारिसं भासइ करेइ वा, सूरप्पमाणभोइत्ति सूर एव पमाणं तस्स उदियमेत्ते आरद्धो जाव न अत्थमेइ ताव भुंजइ सज्झायमाई णं करेति, पडिचोइओ रूसइ, अजीरगाई य असमाहि उप्पज्जइ, एसणाऽसमिएत्ति अणेसणं न परिहरइ पडिचोइओ साहूहिं समं भंडइ, अपरिहरतो य कायाणमुवरोहे वट्टइ, वट्टंतो अप्पाणं असमाहीए जोएइत्ति गाथात्रयसमासार्थः ॥ विस्तरस्तु दशाख्याद् ग्रन्थान्तरादवसेय इति,

एक्कवीसाए सबलेहिं बावीसाए परीसहेहिं तेवीसाए सूयगडज्झयणेहिं चउवीसाए देवेहिं पंचवीसाए भावणाहिं छव्वीसाए दसाकप्पववहाराणं उद्देसणकालेहिं सत्तावीसविहे अणगारचरित्ते अट्ठावीसविहे आयारकप्पे एगूणतीसाए पावसुयपसंगेहिं तीसाए मोहणियठाणेहिं एगतीसाइ सिद्धाइगुणेहिं बत्तीसाए जोगसंगहेहिं ( सूत्रं )

एकविंशतिभिः शबलैः क्रिया प्राग्वत्, तत्र शबलं चित्रमाख्यायते, शबलचारित्रनिमित्तत्वात् करकर्मकरणादयः क्रियाविशेषाः शबला भण्यन्ते, तथा चोक्तं—अवराहंमि पयणुए जेण उ मूलं न वच्चई साहू । सबलेंति तं चरित्तं तम्हा सबलत्तणं बेंति ॥ १ ॥ तानि चैकविंशतिशबलस्थानानि दर्शयन्नाह—

---

१ तत्करोति येन कलहो भवति१७, झञ्झकारी च येन येन गणस्य भेदो भवति सर्वो वा गणो झञ्झितो वर्त्तते तादृशं भाषते करोति वा १८, सूर्यप्रमाणभोजीति सूर्य एव प्रमाणं तस्योदयमात्रादारब्ध यावत् नास्तमयति तावत् भुनक्ति स्वाध्यायादि न करोति, प्रतिचोदितो रुष्यति, अजीर्णत्वादि चासमाधिरुत्पद्यते१९, एषणाऽसमित इत्यनेषणां न परिहरति प्रतिचोदितः साधुभिः समं कलहयति,अपरिहरंश्च कायानामुपरोधे वर्त्तते, वर्त्तमान आत्मानमसमाधिना योजयति २०।अप-

तजह उ हत्थकम्म कुव्वंते मेहुण च सेवंते । राइ च भुंजमाणे आहाकम च भुंजते ॥ १ ॥ तत्तो य रायपिंड कीय पामिच्च अभिहड छेज्जं । भुंजते सबले ऊ पच्चक्खियऽभिक्खभुंजई य ॥ २ ॥ छम्मासब्भतरओ गणा गण संकम करेंते य । मासब्भतर तिण्णि य दगलेवा ऊ करेमाणो ॥ ३ ॥ मासब्भतरओ वा माइठाणाइ तिन्नि करेमाणे । पाणाइवायउट्टि कुव्वंते मुस वयते य ॥ ४ ॥ गिण्हते य अदिण्ण आउट्टि तह अणंतरहियाए । पुढवीय ठाणसेज्ज निसीहियं वावि चेतेइ ॥ ५ ॥ एव ससणिद्धाए ससरक्खाचित्तमंतसिललेलु । कोलावासपइट्ठा कोल घुणा तेसि आवासो ॥ ६ ॥ सअंडसपाणसबीओ जाव उ सताणए भवे तहिय । ठाणाइ चेयमाणो सबले आउट्टिआए उ ॥ ७ ॥ आउट्टि मूलकंदे पुप्फे य फले य बीयहरिए य । भुंजते सबलेए तहेव सवच्छरस्संतो ॥ ८ ॥ दस दगलेवे कुव्व तह माइट्ठाण दस य वरिसन्तो । आउट्टिय सीउदग वग्घारियहत्थमत्ते य ॥ ९ ॥ दव्वीए भायणेण व दीयत भत्तपाण घेत्तूण । भुंजइ सबलो एसो इगवीसो होइ नायव्वो ॥ १० ॥

आसां व्याख्या—हत्थकम्मं सयं करेंति परेण वा करेंते सबले १, मेहुणं च दिव्वाइ ३ अइक्कमाइसु तिसु सालंबणे य सेवंते सबले २, राइं च भुंजमाणेत्ति, एत्थ चउभंगो–दिया गेण्हइ दिया भुंजइ ह्या[४]अतिक्कमाइसु ४ सबले, सालंबणे

---

०राधे प्रतनुके येन तु न मूलं व्रजति साधुः । शबलयति तत् चारित्रं तस्मात् शबलत्वमुक्ते ॥ १ ॥ तद्यथा तु हस्तकर्म कुर्वति मैथुनं च सेवमाने । रात्रौ च भुञ्जाने आधाकर्म च भुञ्जाने ॥ १ ॥ ततश्च राजपिण्डं क्रीतं प्रामित्यं अभिहृतमाच्छेद्यम् । भुञ्जाने शबलस्तु प्रत्याख्यायाभीक्ष्णं भुनक्ति च॥२॥ षण्मासाभ्यन्तरतो गणाद् गणं संक्रमं कुर्वंश्च । मासाभ्यन्तरे त्रींश्च दकलेपांस्तु कुर्वन्॥३॥मासाभ्यन्तरतो वा मातृस्थानानि त्रीणि कुर्वन् । प्राणातिपातमाकुट्या कुर्वन् मृषा वदंश्च॥४॥ गृह्णाति चादत्तं आकुट्या तथाऽनन्तर्हितायां । पृथ्व्यां स्थानं शय्यां नैषेधिकीं वाऽपि करोति ॥ ५ ॥ एवं सस्निग्धायां सरजस्कचित्तवच्छिलालेलुनि । कोलावासप्रतिष्ठा कोला घुणास्तेषामावासः ॥ ६ ॥ साण्डसप्राणसबीजो यावत् ससंतानको भवेत् तत्र । स्थानादि कुर्वन् शबल आकुट्यैव ॥ ७ ॥ आकुट्या मूलकन्दान् पुष्पाणि च फलानि च बीजहरितानि च । भुञ्जानः शबल एष तथैव संवत्सरस्यान्तः ॥८॥ दश दकलेपान् कुर्वन् तथा दश मातृस्थानानि च वर्षान्तः । आकुट्या शीतोदक प्रलम्बिते ( अल्पवृष्टो ) हस्तमात्रेण च॥ ९ ॥ दर्व्या भाजनेन वा ( उदकार्द्रेण ) दीयमानं भक्तपानं गृहीत्वा । भुनक्ति शबल एष एकविंशतितमो भवति ज्ञातव्यः ॥ १० ॥ हस्तकर्म स्वयं करोति परेण वा कारयति शबलो मैथुनं च दिव्यादि अतिक्रमादिभिस्त्रिभिः सालम्बनश्च सेवमानः शबलः, रात्रौ च भुञ्जाने, अत्र चतुर्भङ्गी–दिवा गृह्णाति दिवा भुङ्क्ते ४ अतिक्रमादिषु शबलः सालम्बने

पुण जयणाए, संनिहिमाईसु पडिसेवणाए चेव, एवमन्यत्रापि द्रष्टव्यं ३, 'आहाकंमं च भुंजंते' प्रकटार्थ ४ रायपिंड ५ कीय ६ पामिच्च ७ अभिहड ८ अच्छेज्ज ९ पसिद्धा 'पच्चक्खियभिक्ख भुंजइ य' असइं पच्चक्खिय २ भुंजए सबले १०, अंतो छण्हं मासाणं गणाओ गणमंकमं करेंते सबले अण्णत्थ णाणदंसणचरित्तट्ठयाए ११, 'मासऽभंतर तिण्णि य दगलेवे ऊ करेमाणे' लेवोत्ति नाभिप्पमाणमुदगं, भणियं च—"जंघद्धा संघट्टो णाभी लेवो परेण लेवुवरि"त्ति, अंतो मासस्स तिन्नि उदगलेवे उत्तरते सबले १२, तिण्णि य माइट्ठाणाइं पच्छायणाईणि कुणमाणे सबले १३, आउट्टिआए—उपेत्य पुढवाइ पाणाइवायं कुणमाणे सबले १४, मुसं वयंते सबले १५, अदिण्णं च गिण्हमाणे सबले १६, अणंतरहियाए सचित्तपुढवीए ठाणं काउस्सग्गं सेज्जं सयणं निसीहियं च कुणमाणे सबले, ससणिद्धे दगेण ससरक्खा पुढविरएण, चित्तमंतसिला सचेयणा सिलत्ति भणियं होति, लेलू लेट्टू, कोला—घुणा तेसिमावासो घुणखइयं कट्ठं, तत्थ ठाणाइं करेमाणे सबले, एवं सह अंडाईहिं जं तत्थवि ठाणाइ

१ पुनर्यतनया, सन्निध्यादि प्रतिषेवणायामेव, आधाकर्मणि च भुञ्जाने, राजपिण्ड क्रीत प्रामित्य अभिहृत आच्छेद्य प्रसिद्धानि प्रत्याख्यायाभीक्ष्ण भुनक्ति च—असकृत् प्रत्याख्याय २ भुङ्क्ते शबल, अन्त षण्णां मासानां गणात् गणसंक्रम कुर्वन् शबल अन्यत्र ज्ञानदर्शनचारित्रार्थात्, मासाभ्यन्तरे त्रींश्चोदकलेपान् कुर्वन्, लेप इति नाभिप्रमाणमुदकं, भणित च—जङ्घार्धं संघट्टो नाभिर्लेपः परतो लेपोपरीति, अन्त मासस्य त्रीनुदकलेपानुत्तरन् शबल, त्रीणि च मातृस्थानानि प्रच्छादनादीनि कुर्वन् शबल, ज्ञात्वा पृथ्व्यादिप्राणातिपात कुर्वन् शबल, मृषा वदन् शबल, अदत्त च गृह्णन् शबल, अनन्तर्हिताया सचित्त पृथ्व्या स्थान कायोत्सर्ग शय्या (शयनं) शयन नैषेधिकीं च कुर्वन् शबल, सस्निग्धोदकेन सरजस्क पृथ्वीरजसा चित्तमती शिला सचेतना शिलेति भणित भवति, लेलु—लेष्टु, कोला—घुणा तेषामावासो घुणखादित काष्ठ, तत्र स्थानादि कुर्वन् शबल, एव सहाण्डादिभि यत् तत्रापि स्थानादि

चेएमाणो सबले १७, आउट्टिआए मूलाई भुंजंते सबले १८, वरिसस्संतो दस दगलेवे य माइट्ठाणाइं कुव्वंते सबले, १९-२० सीओदगवग्घारिय हत्थमत्तेण गलंतेणंति भणियं होइ, एवं दव्वीए गलंतीए भायणेण य दिज्जंतं घेत्तूण भुंजमाणे सबले २१ अयं च समासार्थः व्यासार्थस्तु दशाख्यग्रन्थान्तरादवसेयः, एवमसम्मोहार्थं दशानुसारेण सबलस्वरूपमभिहितं, सङ्ग्रहणिकारस्त्वेवमाह—

वरिसंतो दस मासस्स तिन्नि दगलेवमाइठाणाइं । आउट्टिया करेंतो वहालियादिण्णमेहुण्णे ॥ १ ॥
निसिभत्तकम्मनिवपिंड कीयमाई अभिक्खसंवरिएं । कदाइं भुंजते उदउल्लहत्थाइ गेण्हण च ॥ २ ॥
सचित्तसिलाकोले परविणिवाई ससिणिद्ध ससरक्खो । छम्मासतो गणसंकम च कैरकममिइ सबले ॥ ३ ॥

अस्य गाथात्रयस्यापि व्याख्या प्राग्निरूपितसबलानुसारेण कार्या । द्वाविंशतिभिः परीषहैः, क्रिया पूर्ववत्, तत्र "मार्गाच्यवननिर्जरार्थं परिषोढव्याः परीषहाः" (तत्त्वा० अ०९सू० ८) सम्यग्दर्शनादिमार्गाच्यवनार्थं ज्ञानावरणीयादिकर्मनिर्जरार्थं च परि—समन्तादापतन्तः क्षुत्पिपासादयो द्रव्यक्षेत्रकालभावापेक्षाः सोढव्याः—सहितव्या इत्यर्थः, परीषहास्तान् स्वरूपेणाभिधित्सुराह—

खुहा पिवासा सीउण्ह दंसाचेला रइत्थिओ । चरियानिसीहिया सेज्जा अक्कोस वह जायणा ॥ १ ॥

१ कुर्वन् शबल, ज्ञात्वा मूलादि भुञ्जान शबल, वर्षस्यान्तर्दश दकलेपान् दश च मातृस्थानानि कुर्वन् शबल, शीतोदकार्द्रहस्तमात्राभ्यां गलद्भ्यामिति भणित भवति, एव दर्व्या गलन्त्या भाजनेन च दीयमान गृहीत्वा भुञ्जान शबल

अलाभ रोग तणफासा मलसक्कारपरीसहा । पण्णा अण्णाणसम्मत्त इइ बावीस परीसहा ॥ २ ॥

व्याख्या—क्षुत्परीषह—क्षुद्वेदनामुदितामशेषवेदनातिशायिनीं सम्यग्विषहमाणस्य जठरान्त्रविदाहिनीमागमविहितेनान्धसा शमयतोऽनेषणीयं च परिहरतः क्षुत्परीषहजयो भवति, अनेषणीयग्रहणे तु न विजितः स्यात् क्षुत्परीषहः, १, एवं पिपासापरीषहोऽपि द्रष्टव्यः २, 'सीयं'ति शीते महत्यपि पतति जीर्णवसनः परित्राणवर्जितो नाकल्प्यानि वासांसि परिगृह्णीयात् परिभुञ्जीत वा, नापि शीतार्तोऽग्निं ज्वालयेत् अन्यज्वालितं वा नाऽऽसेवयेत्, एवमनुतिष्ठता शीतपरीषहजयः कृतो भवति ३, 'उण्हं' उष्णपरितप्तोऽपि न जलावगाहनस्नानव्यजनवातादि वाञ्छयेत्, नैवातपत्राद्युष्णत्राणायाऽऽददीतेति, उष्णमापतितं सम्यक् सहेत, एवमनुतिष्ठतोष्णपरीषहजयः कृतो भवति ४, 'दंस'त्ति दंशमशकादिभिर्दश्यमानोऽपि न ततः स्थानादपगच्छेत्, न च तदपनयनार्थं धूमादिना यतेत, न च व्यजनादिना निवारयेदिति, एवमनुतिष्ठता दंशपरिषहजयः कृतो भवति ५, एवमन्यत्रापि क्रिया योज्या, 'अचेल'त्ति अमहाधनमूल्यानि खण्डितानि जीर्णानि च वासांसि धारयेत् न च तथाविधो दैन्यं गच्छेत्, तथा चागमः—'परिजुण्णेहि वत्थेहिं, होक्खामित्ति अचेलए । अदुवा सचेलए होक्खं, इति भिक्खू न चितए ॥ १ ॥' इत्यादि ६, 'अरति'त्ति विहरतस्तिष्ठतो वा यद्यरतिरुत्पद्यते तत्रोत्पन्नारतिनाऽपि सम्यग्धर्मारामरतेनैव संसारस्वभावमालोच्य भवितव्यं, 'इत्थीउ'त्ति न स्त्रीणामङ्गप्रत्यङ्गसंस्थानहसितललितनयनविभ्रमादिचेष्टा चिन्तयेत्, न जातुचिच्चक्षुरपि तासु निवेशयेत् मोक्षमार्गार्गलासु कामबुद्ध्येति ८, 'चरिय'त्ति

१ परिजीर्णेषु वस्त्रेषु भविष्याम्यचेलक । अथवा सचेलको भविष्यामीति भिक्षुर्न चिन्तयेत् ॥ १ ॥

वर्जितालस्यो ग्रामनगरकुलादिष्वनियतवसतिर्निर्ममत्वः प्रतिमासं चर्यामाचरेदिति ९, 'निसीहिय'त्ति निषीदन्त्यस्यामिति निषद्या-स्थानं तत् स्त्रीपशुपण्डकविवर्जितां वसतिं सेवेत पश्चाद्भावनिरस्त्रिष्टानिष्टोपसर्गान् सम्यगधिसहेत १०, 'सेज्ज'त्ति शय्या संस्तारकः—चम्पकादिपट्टो मृदुकठिनादिभेदेनोच्चावचः प्रतिश्रयो वा पांशूत्करप्रचुरः शिशिरो बहुघर्मको वा तत्र नोद्विजेत ११, 'अक्कोस'त्ति आक्रोशः-अनिष्टवचनं तच्छ्रुत्वा सत्येतरालोचनया न कुप्येत १२, 'वह'त्ति वधः—ताडनं पाणिपार्ष्णिलताकशादिभिः, तदपि शरीरमवश्यंतया विध्वंसत एवेति मत्वा सम्यक् सहेत, स्वकृतकर्मफलमुपनतमित्येवमभिसंचिन्तयेत् १३, 'जायण'त्ति याचनं-मार्गणं, भिक्षोर्हि वस्त्रपात्रान्नपानप्रतिश्रयादि परतो लब्धव्यं सर्वमेव, शालीनतया च न याच्ञां प्रत्याद्रियते, साधुना तु प्रागल्भ्यभाजा सञ्जाते कार्ये स्वधर्मकायपरिपालनाय याचनमवश्यं कार्यमिति, एवमनुतिष्ठता याञ्चापरीषहजयः कृतो भवति १४, 'अलाभ'त्ति याचितालाभेऽपि प्रसन्नचेतसैवाविकृतवदनेन भवितव्यं १५, 'रोग'त्ति रोगः-ज्वरातिसारकासश्वासादिस्तस्य प्रादुर्भावे सत्यपि न गच्छनिर्गताश्चिकित्सायां प्रवर्तन्ते, गच्छवासिनस्त्वल्पबहुत्वालोचनया सम्यक् सहन्ते, प्रवचनोक्तविधिना प्रतिक्रियामाचरन्तीति, एवमनुतिष्ठता रोगपरीषहजयः कृतो भवति १६, 'तणफास'त्ति अशुषिरतृणस्य दर्भादेः परिभोगोऽनुज्ञातो गच्छनिर्गतानां गच्छनिवासिनां च, तत्र येषां शयनमनुज्ञातं निष्पन्नानां ते तान् दर्भान् भूमावास्तीर्य संस्तारोत्तरपट्टकौ च दर्भाणामुपरि विधाय शेरते, चौरापहृतोपकरणा वा प्रतनुसंस्तारपट्टकावत्यन्तजीर्णत्वात्, तथाऽपि तं परुषकुशदर्भादितृणस्पर्शं सम्यक् सहेत १७, 'मल'त्ति स्वेदवारिसम्पर्कात्कठिनीभूतं रजो मलोऽभिधीयते, स वपुषि स्थिरतामितो ग्रीष्मोष्मसन्तापजनितघर्मजलार्द्रतां गतो दुर्गन्धिर्महान्तमुद्वेगमापादयति, तदपनयनाय न कदाचिदभिलषेत्-अभिलाषं कुर्यात् १८, 'सक्कारपरीसहे'त्ति सत्कारो-भक्तपानवस्त्रपात्रादीनां परतो लाभः पुरस्कारः-सद्भूतगुणोत्कीर्तनं वन्दनाभ्युत्थानासनप्रदानादिव्यवहारश्च, तत्रासत्कारितोऽपुरस्कृतो वा न द्वेषं यायात् १९, 'पण्ण'त्ति प्रज्ञायतेऽनयेति प्रज्ञा-बुद्ध्यतिशयः, तत्प्राप्तौ न गर्वमुद्वहेत् २०, 'अण्णाणं'ति कर्मविपाकजादज्ञानान्नोद्विजेत २१, 'असंमत्तं'ति असम्यक्त्वपरीषहः, सर्वपापस्थानेभ्यो विरतः प्रकृष्टतपोऽनुष्ठायी निःसङ्गश्चाहं तथापि धर्माधर्मात्मदेवनारकादिभावान्नेक्षे अतो मृषा समस्तमेतदिति असम्यक्त्वपरीषहः, तत्रैवमालोचयेत्-धर्माधर्मौ पुण्यपापलक्षणौ यदि कर्मरूपौ पुद्गलात्मकौ ततस्तयोः कार्यदर्शनानुमानसमधिगम्यत्वं, अथ क्षमाक्रोधादिकौ धर्माधर्मौ ततः स्वानुभवत्वादात्मपरिणामरूपत्वात् प्रत्यक्षविरोधः, देवास्त्वत्यन्तसुखासक्तत्वान्मनुष्यलोके कार्याभावात् दुष्षमानुभावाच्च न दर्शनगोचरमायान्ति, नारकास्तु तीव्रवेदनार्ताः पूर्वकृतकर्मोदयनिगडबन्धनवशीकृतत्वादस्वतन्त्राः कथमायान्तीत्येवमालोचयतोऽसम्यक्त्वपरीषहजयो भवति, 'बावीस परीसह'त्ति एते द्वाविंशतिपरीषहा इति गाथाद्वयार्थः ॥त्रयोविंशतिभिः सूत्रकृताध्ययनैः, क्रिया पूर्ववत्, तानि पुनरमूनि—

पुंडरीयंकिरियट्ठाण आहारपरिण्णपच्चक्खाणकिरियाँ य । अणगारअद्दनालंद सोलसाइं च तेवीसं ॥ १ ॥

गाथा निगदसिद्धैव ॥ चतुर्विंशतिभिर्देवैः, क्रिया पूर्ववत्, तानुपदर्शयन्नाह—

भवणवणजोइवेमाणिया य दसअट्ठपंचएगविहा । इइ चउवीसं देवा केइ पुण बेंति अरहंता ॥ १ ॥

इयमपि निगदसिद्धैव ॥ पञ्चविंशतिभिर्भावनाभिः, क्रिया पूर्ववत्, प्राणातिपातादिनिवृत्तिलक्षणमहाव्रतसंरक्षणाय भाव्यन्त इति भावनाः, ताश्चेमाः—

इरियासमिए सया जए, उवेह भुंजेज्ज व पाणभोयण । आयाणनिक्खेवदुगुंछ संजए, समाहिए संजमए मणोवई ॥ १ ॥ अहस्ससच्चे अणुवीइ भासए, जे कोहलोहभयमेव वज्जए । स दीहराय समुपेहिया सिया, मुणी हु मोसं परिवज्जए सया ॥ २ ॥ सयमेव उ उग्गहजायणे, घडे मतिमं निसम्म सइ भिक्खु उग्गहं । अणुण्णविय भुंजिज्ज पाणभोयण, जाइत्ता साहम्मियाण उग्गहं ॥ ३ ॥ आहारगुत्ते अविभूसियप्पा, इत्थिं न निज्झाइ न संथवेज्जा । बुद्धो मुणी खुड्डकहं न कुज्जा, धम्माणुपेही संधए बंभचेरं ॥ ४ ॥ जे सद्दरूवरसगंधमागए, फासे य संपप्प मणुण्णपावए । गिहीपदोसं न करेज्ज पंडिए, स होइ दंते विरए अकिंचणे ॥ ५ ॥

गाथाः पञ्च, आसां व्याख्या-ईरणम् ईर्या, गमनमित्यर्थः, तस्यां समितः—सम्यगित ईर्यासमितः, ईर्यासमितता प्रथमभावना यतोऽसमितः प्राणिनो हिंसेदतः सदा यतः-सर्वकालमुपयुक्तः सन् 'उवेह भुंजेज्ज व पाणभोयणं' 'उवेह'त्ति अवलोक्य भुञ्जीत पानभोजनं, अनवलोक्य भुञ्जानः प्राणिनो हिंसेत, अवलोक्य भोक्तव्यं द्वितीयभावना, एवमन्यत्राप्यक्षरगमनिका कार्या, आदाननिक्षेपौ-पात्रादेर्ग्रहणमोक्षौ आगमप्रसिद्धौ जुगुप्सति-करोत्यादाननिक्षेपजुगुप्सकः, अजुगुप्सन् प्राणिनो हिंस्यात् तृतीयभावना, संयतः—साधुः समाहितः सन् संयमे 'मणोवइ'त्ति अदुष्टं मनः प्रवर्तयेत्, दुष्टं प्रवर्तयन् प्राणिनो हिंसेत् चतुर्थी भावना, एवं वाचमपि पञ्चमी भावना, गताः प्रथमव्रतभावनाः। द्वितीयव्रतभावनाः प्रोच्यन्ते—'अहस्ससच्चे'त्ति अहास्यात्

सत्यः, हास्यपरित्यागादित्यर्थः, हास्यादनृतमपि ब्रूयात्, अतो हास्यपरित्यागः प्रथमभावना, अनुविचिन्त्य–पर्यालोच्य भाषेत, अन्यथाऽनृतमपि ब्रूयात् द्वितीयभावना, यः क्रोधं लोभं भयमेव वा त्यजेत्, स इत्थम्भूतो दीर्घरात्रं–मोक्षं समुपेक्ष्य–सामीप्येन(द्रष्टा) दृष्टा 'सिया' स्यात् मुनिरेव मृषां परिवर्जेत सदा, क्रोधादिभ्योऽनृतभाषणादिति भावनात्रयं, गता द्वितीयव्रतभावनाः। तृतीयव्रतभावनाः प्रोच्यन्ते–'स्वयमेव' आत्मनैव प्रभुं प्रभुसंदिष्टं वाऽधिकृत्य अवग्रहयाञ्चायां प्रवर्तते अनुविचिन्त्यान्यथाऽदत्तं गृह्णीयात् प्रथमभावना, 'घडे सइमं निसम्म'त्ति तत्रैव तृणाद्यनुज्ञापनायां चेष्टेत मतिमान् निशम्य–आकर्ण्य प्रतिग्रहदातृवचनमन्यथा तददत्तं गृह्णीयात्, परिभोग इति द्वितीया भावना, 'सइ भिक्खु उग्गहं'ति सदा भिक्षुरवग्रहं स्पष्टमर्यादयाऽनुज्ञाप्य भजेत, अन्यथाऽदत्त संगृह्णीयात्, तृतीया भावना, अनुज्ञाप्य गुरुमन्यं वा भुञ्जीत पानभोजनम्, अन्यथाऽदत्तं गृह्णीयात् चतुर्थी भावना, याचित्वा साधर्मिकाणामवग्रहं स्थानादि कार्यमन्यथा तृतीयव्रतविराधनेति पञ्चमी भावना, उक्तास्तृतीयव्रतभावनाः। साम्प्रतं चतुर्थव्रतभावनाः प्रोच्यन्ते—'आहारगुत्ते'त्ति आहारगुप्तः स्यात् नातिमात्रं स्निग्धं वा भुञ्जीत, अन्यथा ब्रह्मव्रतविराधकः स्यात् प्रथमा भावना, अविभूषितात्मा स्याद्–विभूषां न कुर्याद्, अन्यथा ब्रह्मव्रतविराधकः स्यात् द्वितीया भावना, स्त्रियं न निरीक्षेत तदव्यतिरेकादिन्द्रियाणि नाऽऽलोकयेद्, अन्यथा ब्रह्मविराधकः स्यात् तृतीया भावना, 'न संथवेज्ज'त्ति न स्त्र्यादिसंसक्तां वसतिं सेवेत, अन्यथा ब्रह्मविराधकः स्यात् चतुर्थी भावना, बुद्धः–अवगततत्त्वः मुनिः–साधुः क्षुद्रकथां न कुर्यात् स्त्रीकथां स्त्रीणा वेति, अन्यथा ब्रह्मविराधकः स्यात पञ्चमी भावना, 'धम्म (धम्माणु) पेही संधए बंभचेरं'ति निगदसिद्धम्, उक्ताश्चतुर्थव्रतभावनाः। पञ्चमव्रतभावनाः प्रोच्यन्ते–यः शब्दरूपरसगन्धानागतान्, प्राकृतशैल्याऽलाक्षणिकोऽनुस्वारः, स्पर्शांश्च संप्राप्य मनोज्ञपापकान्–इष्टानिष्टानित्यर्थः, गृद्धिम्–अभिष्वङ्गलक्षणां, प्रद्वेषः प्रकटस्तं न कुर्यात् पण्डितः, स भवति दान्तो विरतोऽकिञ्चन इति, अन्यथाऽभिष्वङ्गादेः पञ्चममहाव्रतविराधना स्यात्, पञ्चापि भावनाः, उक्ताः पञ्चमहाव्रतभावनाः, अथवाऽसम्मोहार्थं यथाक्रमं प्रकटार्थाभिरेव भाष्यगाथाभिः प्रोच्यन्ते–"पणवीस भावणाओ पंचण्ह महव्वयाणमेयाओ। भणियाओ जिणगणहरपुज्जेहिं नवर सुत्तमि ॥ १ ॥ इरियासमिइ पढमा आलोइयभत्तपाणभोई य। आयाणभंडनिक्खेवणा य समिई भवे तइया ॥ २ ॥ मणसमिई वयसमिई पाणइवायंमि हौंति पंचेव। हासपरिहारअणुवीइ भासणा कोहलोहभयपरिण्णा ॥ ३ ॥ एस मुसावायस्स अदिन्नदाणस्स हौंतिमा पंच। पहुसंदिट्ठ पहू वा पढमोग्गह जाएँ अणुवीई ॥ ४ ॥ उग्गहणसील विइया तत्थोग्गेण्हेज्ज उग्गहं जहियं। तणडगलमल्लगाई अणुण्णवेज्जा तहिं तहियं ॥ ५ ॥ तचंमि उग्गहं तू अणुण्णवे सारिउग्गहे जा उ। तावइय मेर काउं न कप्पई बाहिरा तस्स ॥ ६ ॥ भावण चउत्थ साहंमियाण सामण्णमण्णपाणं तु। संघाडगमाईणं भुंजेज्ज अणुण्णविए उ ॥ ७ ॥ पंचमियं गंतूणं साहम्मियउग्गहं अणुण्णविया। ठाणाई चेएज्जा पंचेव अदिण्णदाणस्स ॥ ८ ॥ बंभवयभावणाओ णो अइमायापणीयमाहारे। दोच्च अविभूसणा ऊ विभूसवत्ती न उ हवेज्जा ॥ ९ ॥ तच्चा भावण इत्थीण इंदिया मणहरा ण णिज्झाए। सयणासणा विवित्ता इत्थिपसुविवज्जिया सेज्जा ॥ १० ॥ एस चउत्था ण कहे इत्थीण कहं तु पंचमा एसा। सद्दा रूवा गंधा रसफासा पंचमी एए ॥ ११ ॥ रागद्दोसविवज्जण अपरिग्गहभावणाउ पंचेव। सव्वा पणवीसेया एयासु न वट्टियं जं त ॥ १२ ॥"

षड्विंशतिभिर्दशाकल्पव्यवहाराणामुद्देशनकालैः, क्रिया पूर्ववत्, तानेवोद्देशनकालान्–श्रुतोपचारान् दर्शयन्नाह सङ्ग्रहणिकारः

दस उद्देसणकाला दसाण कप्पस्स हौंति छच्चेव। दस चेव ववहारस्स हौंति सव्वेवि छव्वीस ॥ १ ॥

निगदसिद्धा। सप्तविंशतिप्रकारेऽनगारचारित्रे सति–साधुचारित्रे सति तद्विषयो वा प्रतिषिद्धादिना प्रकारेण योऽतिचारः कृत इति प्राग्वत्, सप्तविंशतिभेदान् प्रतिपादयन्नाह सङ्ग्रहणिकारः–

वयछक्कमिंदियाण च निग्गहो भावकरणसच्चं च। खमयाविरागयाविय मणमाईण निरोहो य ॥ १ ॥

कायाण छक्क जोगाण जुत्तया वेयणाऽहियासणया। तह मारणंतियऽहियासणा य एएऽणगारगुणा ॥ २ ॥

गाथाद्वयम्, अस्य व्याख्या–व्रतषट्कं–प्राणातिपातादिविरतिलक्षणं रात्रिभोजनविरतिपर्यवसानम्, इन्द्रियाणां च श्रोत्रादीनां निग्रहः–इष्टेतरेषु शब्दादिषु रागद्वेषाकरणमित्यर्थः, भावसत्यं–भावलिङ्गम् अन्तःशुद्धिः, करणसत्यं च बाह्यं प्रत्युपेक्षणादिकरणसत्यं भण्यते, क्षमा क्रोधनिग्रहः, विरागता लोभनिग्रहः, मनोवाक्कायानामकुशलानामकरणं कुशलानामनिरोधश्च, कायानां–पृथिव्यादीनां षट्कं सम्यगनुपालनविषयतयाऽनगारगुणा इति, संयमयोगयुक्तता, वेदना–शीतादिलक्षणा तदभिसहना वा, तथा मारणान्तिकाऽभिसहना च–कल्याणमित्रबुद्ध्या मारणान्तिकोपसर्गसहनमित्यर्थः एतेऽनगारगुणा इति गाथाद्वयार्थः ॥ अष्टाविंशतिविध आचार एवाऽऽचारप्रकल्पः, क्रिया पूर्ववत्, अष्टाविंशतिभेदान् दर्शयति–

सत्थपरिण्णा लोगो विजओ य सीओसणिज्ज सम्मत्त। आवंति धुवविमोहो उवहाणसुय महापरिण्णा य ॥ १ ॥

पिंडेसणसिज्जिरियौ भासज्जाया य वत्थपाएसा। उग्गहपडिमा सत्तेक्कसत्तय भावणविमुत्तीओ ॥ २ ॥

उग्घायमणुग्घायं आरुवणा तिविहमो णिसीहं तु। इय अट्ठावीसविहो आयारपकप्पणामोऽय ॥ ३ ॥

गाथात्रयं निगदसिद्धमेव, एकोनत्रिंशद्भिः पापश्रुतप्रसङ्गैः, क्रिया पूर्ववत्, पापोपादानानि श्रुतानि पापश्रुतानि तेषां प्रसङ्गाः-तथाऽऽसेवनारूपा इति, पापश्रुतानि दर्शयन्नाह सङ्ग्रहणिकारः—

अट्ठनिमित्तंगाइं दिव्वुप्पायंतलिक्खभोमं च । अंगसरलक्खणवंजण च तिविहं पुणोक्केक्कं ॥ १ ॥
सुत्तं वित्ती तह वत्तियं च पावसुय अउणतीसविहं । गंधव्वनट्टवत्थुं आउं धणुवेयसंजुत्तं ॥ २ ॥

गाथाद्वयम्, अस्य व्याख्या—अष्ट निमित्ताङ्गानि दिव्यं-व्यन्तराद्यट्टहासादिविषयम्, उत्पातं-सहजरुधिरवृष्ट्यादिविषयम्, अन्तरिक्षं-ग्रहभेदादिविषयं, भौमं-भूमिविकारदर्शनादेवासादिदं भवतीत्यादिविषयम्, अङ्गम्-अङ्गविषयं स्वर-स्वरविषयं, व्यञ्जनं-मषादि तद्विषयं, तथा च-अङ्गादिदर्शनतस्तद्विदो भाविन सुखादि जानन्त्येव, त्रिविधं पुनरेकैकं दिव्यादि सूत्रं वृत्तिः तथा वार्तिकं च, उत्यनेन भेदेन-दिव्वाईण सरूवं अंगविवज्जाण होंति सत्ताणं । सुत्तं सहस्स लक्खो य वित्ती तह कोडि वक्खाणं ॥ १ ॥ अंगस्स सयसहस्सं सुत्तं वित्ती य कोडि विन्नेया । वक्खाणं अपरिमियं इच्चेव य वत्तियं जाण ॥ २ ॥' पापश्रुतमेकोनत्रिंशद्विधं, कथम्?, अष्टौ मूलभेदाः सूत्रादिभेदेन त्रिगुणिताश्चतुर्विंशतिः गन्धर्वादिसंयुक्ता एकोनत्रिंशद्भवन्ति, 'वत्थु'त्ति वास्तुविद्या 'आउ'त्ति वैद्यकं, शेषं प्रकटार्थं ॥

१ दिव्यादीनां स्वरूपमङ्गविवर्जितानां भवति सप्तानाम् । सूत्रं सहस्रं लक्षं च वृत्तिस्तथा कोटी व्याख्यानम् ॥ १ ॥ अङ्गस्य शतसहस्रं सूत्रं वृत्तिश्च कोटी विज्ञेया । व्याख्यानमपरिमितं इत्थमेव वार्तिकं जानीहि ॥ २ ॥

त्रिंशद्भिर्मोहनीयस्थानैः, क्रिया पूर्ववत्, सामान्येनैकप्रकृतिकर्म मोहनीयमुच्यते, उक्तं च-'अट्ठविहंपि य कम्मं भणियं मोहोत्ति जं समासेण'मित्यादि, विशेषेण चतुर्थी प्रकृतिर्मोहनीयं तस्य स्थानानि-निमित्तानि भेदाः पर्याया मोहनीयस्थानानि, तान्यभिधित्सुराह सङ्ग्रहणिकारः

'वारिमज्झेऽवगाहित्ता, तसे पाणे विहिंसई । छाएउ मुहं हत्थेणं, अंतोनायं गलेरवं ॥ १ ॥ सीसावेढेण वेढित्ता, संकिलेसेण मारए । सीसंमि जे य आहंतु, दुहमारेण हिंसई ॥ २ ॥ बहुजणस्स नेयारं, दीवं ताणं च पाणिणं । साहारणे गिलाणंमि, पहू किच्चं न कुव्वई ॥ ३ ॥ साहू अकम्म धम्माओ, जे भंसेइ उवट्ठियं । नेयाउयस्स मग्गस्स, अवगारंमि वट्टई ॥ ४ ॥ जिणाणं णंतणाणीणं, अवण्णं जो उ भासई । आयरियउवज्झाए, खिंसई मंदबुद्धीए ॥ ५ ॥ तेसिमेव य णाणीणं, सम्मं नो पडितप्पई । पुणो पुणो अहिगरणं, उप्पाए तित्थभेयए ॥ ६ ॥ जाणं आहम्मिए जोए, पउंजइ पुणो पुणो । कामे वमित्ता पत्थेइ, इहऽन्नभविए इयं ॥ ७ ॥ भिक्खूणं बहुसुएऽहंति, जो भासइऽबहुस्सुए । तहा य अतवस्सी उ, जो तवस्सित्तिऽहं वए ॥ ८ ॥ जायतेएण बहुजणं, अंतोधूमेण हिंसई । अकिच्चमप्पणा काउं, कयमेएण भासई ॥ ९ ॥ नियडुवहिपणिहीए, पलिउंचे साइजोगजुत्ते य । बेइ सव्वं मुसं वेयंसि, अक्खीणझंझए सयी ॥ १० ॥ अद्धाणंमि पवेसित्ता जो, धणं हरइ पाणिणं । वीसंभित्ता उवाएणं, दारे तस्सेव लुब्भई ॥ ११ ॥ अभिक्खमकुमारेहिं, कुमारेऽहंति भासई । एवं अबंभयारीवि, बंभयारित्तिऽहं वए ॥ १२ ॥ जेणेविस्सरियं णीए, वित्ते तस्सेव लुब्भई । तप्पभावुट्ठिए वावि, अंतरायं करेइ से ॥ १३ ॥ सेणावइं पसत्थारं, भत्तारं वावि हिंसई । रट्ठस्स वावि निगमस्स, नायगं सेट्ठिमेव वा ॥ १४ ॥ अपस्समाणो पस्सामि, अहं देवेत्ति वा वए । अवण्णेणं च देवाणं, महामोहं पकुव्वइ ॥ १५ ॥

१ अष्टविधमपि च कर्म भणितं मोह इति यत् समासेन ।

गाथाः पञ्चदश, आसां व्याख्या—'वारिमज्झे' पाणियमज्झे 'अवगाहित्त'त्ति तिव्वेण मणसा पाएण अक्कमित्ता तसे पाणे-इत्थिमाई विहिंसइ, 'से' तस्स महामोहमुप्पाएमाणे संकिलिट्ठचित्तत्तणओ य भवसयदुहवेयणिज्जं अप्पणो महामोहं पकुव्वइ, एवं सर्वत्र क्रिया वाच्या १, तथा 'छाएउ' ढंकिउं मुहं 'हत्थेणं'ति उवलक्खणमिदमन्नाणि य कप्पाईणि 'अंतोनदं'ति हिदए सदुक्खमारसंतं 'गलेरवं' गलएण अच्चंतं रडति हिंसति २, 'सीसावेढेण' अल्लचम्माइणा कएणाभिक्खणं वेढेत्ता 'संकिलेसेण' तिव्वासुहपरिणामेण 'मारए' हिंसइ जीवंति ३, सीसंमि जे य आहंतु-मोग्गराइणा विभिंदिय सीसं 'दुहमारेण' महामोहजणगेण हिंसइत्ति ४, बहुजणस्स नेयारंति-पहुं सामित्ति भणियं होइ, दीवं समुद्दमिव वुज्झमाणाणं संसारे आसासथाणभूयं ताणं च-अण्णपाणाइणा ताणकारिणं 'पाणिणं' जीवाणं तं च हिंसइ, से तं विहिंसंते बहुजणसंमोहकारणेण महामोहं पकुव्वइ ५, साहारणे-सामण्णे गिलाणंमि पहू-समत्थो उवएसेण सइकरणेण वा तप्पिउं तहवि 'किच्चं' ओसहजायणाइ महाघोरपरिणामो न कुव्वइ सेऽवि महामोहं पकुव्वइ, सव्वसामण्णो य गिलाणो भवइ, तथाजिनोपदेशाद्, उक्तं च—'किं भंते ! जो गिलाणं पडियरइ से धण्णे उदाहु जे तुमं दंसणेण पडिवज्जइ ?, गोयमा ! जे गिलाणं पडियरइ, से केणट्ठेणं भंते ! एवं वुच्चइ ?, गोयमा ! जे गिलाणं पडियरइ से मं दंसणेणं पडिवज्जइ

१ किं भदन्त ! यो ग्लानं प्रतिचरति स धन्य उताहो यो युष्मान् दर्शनेन प्रतिपद्यते ?, गौतम ! यो ग्लानं प्रतिचरति, तद् केनार्थेन भदन्तैवमुच्यते ?, गौतम ! यो ग्लानं प्रतिचरति स मां दर्शनेन प्रतिपद्यते, यो मां दर्शनेन प्रतिपद्यते

जे मं दंसणेण पडिवज्जइ से गिलाणं पडियरइत्ति,आणाकरणसारं खु अरहंताणं दंसणं,से तेणट्ठेणं गोयमा! एवं वुच्चइ-जे गिलाणं पडियरइ से मं पडिवज्जइ, जे मं पडिवज्जइ से गिलाणं पडिवज्जईत्यादि ६, तहा 'साहुं' तवस्सिं अकम्म-बलात्कारेण धम्माओ-सुयचरित्तभेयाओ जे महामोहपरिणामे भंसेतित्ति-विनिवारेइ उवट्ठियं-सामीप्येन स्थितं ७, नेयाउयस्स-नयनशीलस्य मग्गस्स-णाणादिलक्खणस्स दूसणपगारेण अप्पाणं परं च विपरिणामंतो अवगारंमि वट्टइ, णाणे-'काया वया य तेच्चिय' एवमाइणा, दंसणे 'ऐते जीवाणंता कहमसंखेज्जपएसियंमि लोयंमि ठाएज्जा ?, एवमाइणा, चारित्ते 'जीवबहुत्ताउ कहमहिंसगत्तंति चरणाभाव' इत्यादिना ८, तथा जिणाणं-तित्थगराणं अणंतणाणीणं-केवलीणं अवन्नं-निंदं जो महाघोरपरिणामो 'पभासइ' भणति, कथं ?, ज्ञेयाऽनन्तत्वात्सर्वार्थज्ञानस्याभाव एव, तथा च-'अज्जेवि धावति णाणं अज्जवि लोओ अणंतओ होइ । अज्जवि न तुहं कोई पावइ सव्वण्णुयं जीवो ॥ १ ॥' एवमाइ पभासइ, न पुणज्जाणति जहा-'खीणावरणो जुगवं लोगमलोगं जिणो पगासेइ । ववगयघणपडलो इव परिमिययं देसमाइच्चो ॥ १ ॥' ९, आयरियउवज्झाए

१ स ग्लान प्रतिचरतीति, आज्ञाकरणसारमेवार्हतां दर्शनं, तदेतेनार्थेन गौतमैवमुच्यते-यो ग्लानं प्रतिचरति स मां प्रतिपद्यते यो मां प्रतिपद्यते स ग्लानं प्रतिपद्यते ( प्रतिचरति ) २। काया व्रतानि च तान्येव । ३ एते जीवा अनन्ताः कथमसङ्ख्येयप्रदेशिके लोके तिष्ठेयुः ? । ४ जीवबहुत्वात् कथमहिंसकत्वमिति चरणाभाव ५ अद्यापि धावति ज्ञानमद्यापि लोकोऽनन्तको भवति । अद्यापि न तव कोऽपि प्राप्नोति सर्वज्ञतां जीव ॥ १ ॥ ६क्षीणावरणो युगपत् लोकमलोकं जिन प्रकाशयति । व्यपगतघनपटल इव परिमितं देशमादित्य ॥ १ ॥

पसिद्धे 'खिंसइ' निंदइ जच्चाईहिं, अबहुस्सुया वा एए तहावि अम्हेवि एएसिं तु सगासे किंपि कहंचि अवहारियंति 'मंदबुद्धीए' बालेत्ति भणियं होइ १०,'तेसिमेव'य आयरिओवज्झायाणं परमबंधूणं परमोवगारीणं'णाणीण'न्ति गुणोवलक्खणं गुणेहिं पभाविए पुणो तेसिं चेव कज्जे समुप्पण्णे 'संमं न पडितप्पइ' आहारोवगरणाईहिं णोवजुज्जेइ ११, 'पुणो पुणो'त्ति असइं 'अहिगरणं' जो तिस्माइ 'उप्पाए' कहेइ निवजत्ताइ 'तित्थभेयए' णाणाइमग्गविराहणत्थंति भणियं होइ १२, जाणं आहंमिए जोए-वसीकरणाइलक्खणे पउंजइ 'पुणो पुणो' असइत्ति १३, 'कामे' इच्छामयणभेयभिण्णे 'वमेत्ता' चइऊण, पव्वजमब्भुवगम्म 'पत्थेइ' अभिलसइ इहभविए-माणुस्से चेव अण्णभविए-दिव्वे १४, 'अभिक्खणं २' पुणो २ बहुस्सुएऽहंति जो भासए, बहुस्सुए ( बहुस्सुएण ) अण्णेण वा पुट्ठो स तुमं बहुस्सुओ ?, आमंति भणइ तुण्हिक्को वा अच्छइ, साहवो चेव बहुस्सुएत्ति भणति १५, अतवस्सी तवस्सिमित्ति विभासा १६, 'जायतेएण' अग्गिणा बहुजणं घरे छोढुं 'अंतो धूमेण' अब्भितरे धूमं काऊण हिंसइ १७, 'अकिच्चं' पाणाइवायाइ अप्पणा काउं कयमेएण भासइ-अण्णस्स उत्थोभं देइ १८, 'नियडुवहिपणिहीए पलिउंचइ' नियडी-अण्णहाकरणलक्खणा माया उवही तं करेइ जेण तं पच्छाइज्जइ अण्णहाकयं पणिही एवंभूत एव ( च ) रइ, अनेन प्रकारेण 'पलिउचइ' वंचेइत्ति भणियं होइ १९, साइजोगजुत्ते य-अशुभमनोयोगयुक्तश्च २०, 'वेति' भणइ सव्वं मुसं वयइ सभाए २१, 'अक्खीणझंझए सया' अक्षीणकलह इत्यर्थः, झंझा-कलहो २२, 'अद्धाणंमि' पंथे 'पवेसेत्ता' नेऊण विस्संभेण जो धणंसुवण्णाई हरइ पाणिणं-अच्छिदइ २३, जीवाणं, विस्संभेत्ता-उवाएण केणइ अतुलं पीइं काऊण पुणो दारे-कलत्ते 'तस्सेव' जेण समं पीई कया तत्थ लुब्भइ २४, 'अभिक्खणं' पुणो २ अकुमारे संते कुमारेऽहंति भासइ २५, एवमबंभयारिंमि विभासा २६, जेणेविस्सरियं नीए-ऐश्वर्य प्रापित इत्यर्थः, 'वित्ते' धणे तस्सेव संतिए लुब्भइ २७, तप्पभावुट्ठिए वावि-लोगसंमयत्तणं पत्ते तस्सेव केणइ पगारेण अंतरायं करेइ २८ सेणावइं रायाणुन्नायं वा चाउरंतसामिं पसत्थारं-लेहारियमाइ भत्तारं वा विहिंसइ रट्ठस्स वावि निगमस्स जहासंखं नायगं सेट्ठिमेव वा, निगमो-वणिसंघाओ २९, अप्पस्समाणो माइट्ठाणेण पासामि अहं देवत्ति वा वए ३०, 'अवन्नेणं च देवाणं' जह किं तेहिं कामगद्दहेहिं जे अम्हं न उवकरेंति, महामोहं पकुव्वइ कलुसियचित्तत्तणओ ३१, अयमधिकृतगाथानामर्थः। एकत्रिंशद्भिः सिद्धादिगुणैः, क्रिया पूर्ववत्, सित ध्मातमस्येति सिद्धः आदौ गुणा आदिगुणाः सिद्धस्यादिगुणाः सिद्धादिगुणाः, युगपद्भाविनो न क्रमभाविन इत्यर्थः, तानेवोपदर्शयन्नाह सङ्ग्रहणिकारः-

पडिसेहेण सठाणवण्णगंधरसफासवेए य । पणपणदुपणट्ठतिहा इगतीसमकायसंगरुहा ॥ १ ॥

अस्या व्याख्या-प्रतिषेधेन संस्थानवर्णगन्धरसस्पर्शवेदानां, कियद्भेदानां ?-पञ्चपञ्चद्विपञ्चाष्टत्रिभेदानामिति, किम् ?-एगत्रिंशत्सिद्धादिगुणा भवन्ति, 'अकायसंगरुह'त्ति अकायः-अशरीरः असङ्गः-सङ्गवर्जितः अरुहः-अजन्मा, एभिः सहैकात्रिंशद्भवन्ति, तथा चोक्तं-"से ण दीहे ण हस्से ण वट्टे न तंसे न चउरंसे न परिमंडले ५ न किण्हे न नीले न लोहिए न हालिद्दे न सुकिले ५ न सुब्भिगंधे न दुब्भिगंधे २ न तित्ते न कडुए न कसाए न अंबिले न महुरे ५ न कक्खडे न मउए

१ स न दीर्घ न ह्रस्वो न वृत्तो न त्र्यस्रो न चतुरस्रो न परिमण्डलो न कृष्णो न नीलो न लोहितो न हारिद्रो न शुक्लो न सुरभिर्न दुर्गन्धो न तिक्तो न कटुको न कषायो नाम्लो न मधुरो न कर्कशो न मृदुर्न

न गरुए न लहुए न सीए न उण्हे न निद्धे न लुक्खे न काए ण संगे न रुहे न इत्थी न पुरिसे न नपुंसए," प्रकारान्तरेण सिद्धादिगुणान् प्रदर्शयन्नाह—

अहवा कम्मे णव दरिसणम्मि चत्तारि आउए पंच । आइम अंते सेसे दोदो खीणभिलावेण इगतीसं ॥ १ ॥

व्याख्या—'अथवे'ति व्याख्यान्तरप्रदर्शनार्थः, 'कर्मणि' कर्मविषया क्षीणाभिलापेनैकत्रिंशद्गुणा भवन्ति, तत्र नव दर्शनावरणीये, नवभेदा इति–क्षीणचक्षुर्दर्शनावरणः ४ क्षीणनिद्रः ५, चत्वार आयुष्के–क्षीणनरकायुष्कः ४ 'पंच आइमे'त्ति आद्ये ज्ञानावरणीयाख्ये कर्मणि पञ्च–क्षीणाभिनिवोधिकज्ञानावरणः ५ 'अंते'त्ति अन्त्ये–अन्तराये कर्मणि पञ्चैव क्षीणदानान्तरायः ५ शेषकर्मणि–वेदनीयमोहनीयनामगोत्रलक्षणे द्वौ द्वौ भेदौ भवतः, क्षीणसातावेदनीयः क्षीणासातावेदनीयः क्षीणदर्शनमोहनीयः क्षीणचारित्रमोहनीयः क्षीणाशुभनाम क्षीणशुभनाम क्षीणनीचैर्गोत्रः क्षीणोच्चैर्गोत्र इति गाथार्थः ॥

द्वात्रिंशद्भिर्योगसङ्ग्रहैः, क्रिया पूर्ववत्, इह युज्यन्त इति योगाः–मनोवाक्कायव्यापाराः, ते चाशुभप्रतिक्रमणाधिकारात्प्रशस्ता एव गृह्यन्ते, तेषां शिष्याचार्यगतानामालोचनानिरपलापादिना प्रकारेण सङ्ग्रहणानि योगसङ्ग्रहाः प्रशस्तयोगसङ्ग्रहनिमित्तत्वादालोचनादय एव तथोच्यन्ते, ते च द्वात्रिंशद्भवन्ति, तदुपदर्शनायाह निर्युक्तिकारः—

आलोयणा निरवलावे, आवईसु दढधम्मया । अणिस्सिओवहाणे य, सिक्खा णिप्पडिकम्मया ॥ १२७४ ॥

---

१ गुरुर्न लघुर्न शीतो नोष्णो न स्निग्धो न रूक्षो न कायवान् न सङ्गवान् न रुहो न स्त्री न पुरुषो न नपुंसक

अण्णायया अलोहे य, तितिक्खा अज्जवे सुई । सम्मदिट्ठी समाही य, आयारे विणओवए ॥ १२७५ ॥
धिई मई य संवेगे, पणिही सुविहि संवरे । अत्तदोसोवसंहारो, सव्वकामविरत्तया ॥ १२७६ ॥
पच्चक्खाणे विउस्सग्गे, अप्पमाए लवालवे । झाणसंवरजोगे य, उदए मारणंतिए ॥ १२७७ ॥
संगाणं च परिण्णा, पायच्छित्तकरणे इय । आराहणा य मरणंते, बत्तीसं जोगसंगहा ॥ १२७८ ॥

आसां व्याख्या—'आलोयण'त्ति प्रशस्तमोक्षसाधकयोगसङ्ग्रहाय शिष्येणाऽऽचार्याय सम्यगालोचना दातव्या१,'निरवलावे'त्ति आचार्योऽपि प्रशस्तमोक्षसाधकयोगसङ्ग्रहायैव दत्तायामालोचनायां निरपलापः स्यात्, नान्यस्मै कथयेदित्यर्थः, एकारान्तश्च प्राकृते प्रथमान्तो भवतीत्यसकृदावेदितं यथा–'कयरे आगच्छइ दित्तरूवे'इत्यादि २,'आवतीसु दढधम्मत'त्ति तथा योगसङ्ग्रहायैव सर्वेण साधुनाऽऽपत्सु द्रव्यादिभेदासु दृढधर्मता कार्या,आपत्सु सुतरां दृढधर्मेण भवितव्यमित्यर्थः,३, 'अणिस्सिओवहाणे'त्ति प्रशस्तयोगसङ्ग्रहायैवानिश्रितोपधानं च कार्यम्, अथवाऽनिश्रित उपधाने च यत्नः कार्यः, उपदधातीत्युपधानं–तपः न निश्रितमनिश्रितम्–ऐहिकामुष्मिकापेक्षाविकलमित्यर्थः, अनिश्रितं च तदुपधानं चेति समासः ४, 'सिक्ख'त्ति प्रशस्तयोगसङ्ग्रहायैव शिक्षाऽऽसेवितव्या, सा च द्विप्रकारा भवति–ग्रहणशिक्षाऽऽसेवनाशिक्षा च ५, 'निप्पडिकम्मय'त्ति प्रशस्तयोगसङ्ग्रहायैव निष्प्रतिकर्मशरीरता सेवनीया, न पुनर्नागदत्तवदन्यथा वर्तितव्यमिति ६ प्रथमगाथासमासार्थः ॥ 'अन्नायय'त्ति तपस्यज्ञातता कार्या, यथाऽन्यो न जानाति तथा तपः कार्य, प्रशस्तयोगाः सङ्गृहीता भवन्तीत्येतत् सर्वत्र योज्यं ७,'अलोहे'त्ति अलोभश्च कार्यः, अथवाऽलोभे यत्नः कार्यः ८, 'तितिक्ख'त्ति तितिक्षा कार्या, परीषहादिजय इत्यर्थः९,'अज्जवे'त्ति ऋजुभावः–आर्जवं तच्च कर्तव्यं१०,'सुइ'त्ति शुचिना भवितव्यं, संयमवतेत्यर्थः११, 'सम्मद्दिट्ठि'त्ति सम्यग्–अविपरीता दृष्टिः कार्या, सम्यग्दर्शनशुद्धेरित्यर्थः १२, समाधिश्च कार्यः, समाधानं समाधिः–चेतसः स्वास्थ्यं १३, 'आचारे विणओवए'त्ति द्वारद्वयम्, आचारोपगः स्यात्, न मायां कुर्यादित्यर्थः १४, तथा विनयोपगः स्यात्, न मानं कुर्यादित्यर्थः१५, द्वितीयगाथासमासार्थः॥ 'धिई मई य'त्ति धृतिर्मतिश्च कार्या,धृतिप्रधाना मतिरित्यर्थः१६,'संवेगे'त्ति संवेगः कार्यः १७,'पणिहि'त्ति प्रणिधिस्त्याज्या, माया न कार्येत्यर्थः१८,'सुविहि'त्ति सुविधिः कार्यः१९, 'संवरे'त्ति संवरः कार्यः, न तु न कार्य इति व्यतिरेकोदाहरणमत्र भावि २०,'अत्तदोसोवसंहारे'त्ति आत्मदोषोपसंहारः कार्यः २१, 'सवकामविरत्तय'त्ति सर्वकामविरक्तता भावनीया २२, इति तृतीयगाथासमासार्थः॥ 'पच्चक्खाणे'त्ति मूलगुणउत्तरगुणविषयं प्रत्याख्यानं कार्यमिति द्वारद्वयं२३-२४,'विउस्सग्गे'त्ति विविध उत्सर्गो व्युत्सर्गः स च कार्य इति द्रव्यभावभेदभिन्नः, २५'अप्पमाए'त्ति न प्रमादोऽप्रमादः, अप्रमादः कार्यः २६, 'लवालवे'त्ति कालोपलक्षणं क्षणे २ सामाचार्यनुष्ठानं कार्य २७, 'झाणसंवरजोगे'त्ति ध्यानसंवरयोगश्च कार्यः, ध्यानमेव संवरयोगः, २८,'उदये मारणंतिए'त्ति वेदनोदये मारणान्तिकेऽपि न क्षोभः कार्य इति २९ चतुर्थगाथासमासार्थः॥ 'संगाण च परिण्ण'त्ति सङ्गानां च ज्ञपरिज्ञाप्रत्याख्यानपरिज्ञाभावेन परिज्ञा कार्या ३०, 'पायच्छित्तकरणे इय' प्रायश्चित्तकरणं च कार्य ३१ 'आराहणा य मरणंति'त्ति आराधना च मरणान्ते कार्या, मरणकाल इत्यर्थः, ३२ एते द्वात्रिंशद् योगसङ्ग्रहा इति पञ्चमगाथासमासार्थः॥ ॥ आद्यद्वाराभिधित्सयाऽऽह—

उज्जेणि अट्टणे खलु सीहगिरिसोपारए य पुहइवई । मच्छियमल्ले दूरलकूविए फलिहमल्ले य ॥ १२७९ ॥

उज्जेणित्ति णयरी, तीए जियसत्तुरण्णो अट्टणो मल्लो अतीव बलवं, सोपारए पट्टणे पुहइवई राया सिंहगिरी नाम मल्लवल्लहो, पतिवरिसमट्टणजओहामिएण अणेण मच्छियमल्ले कए जिएण अट्टणेण भरुगच्छाहरणीए दूरुल्लकूवियाए गामे फलिहमल्ले कएत्ति । एवमक्षरगमनिकाऽन्यासामपि स्वबुद्ध्या कार्या, कथानकान्येव कथयिष्यामः, अधिकृतगाथाप्रतिबद्धकथानकमपि विनेयजनहितायोच्यते–उज्जेणीणयरीए जियसत्तू राया, तस्स अट्टणो मल्लो सव्वरज्जेसु अजेओ, इओ य समुद्दतीरे सोपारयं णयरं, तत्थ सीहगिरी राया, सो य मल्लाणं जो जिणइ तस्स बहुं दव्वं देइ, सो य अट्टणो तत्थ गंतूण वरिसे २ पडायं गिण्हइ, राया चिंतेइ–एस अन्नाओ रज्जाओ आगंतूण पडायं हरइ, एस मम ओहावणत्ति पडिमल्लं मग्गइ, तेण एगो मच्छिओ दिट्ठो वसं पिवंतो, बलं च से विन्नासियं, नाऊण पोसिओ, पुणरवि अट्टणो आगओ, सो य किर महो होहितित्ति अणागयं चेव सयाओ णयराओ अप्पणो पत्थयणस्स अवल्लं भरिऊण अव्वावाहेणं एइ,

१ उज्जयिनी नगरी, तस्या जितशत्रुराज्ञोऽट्टणो मल्लोऽतीव बलवान्, सोपारके पत्तने पृथ्वीपती राजा सिंहगिरिर्नाम मल्लवल्लभ, प्रतिवर्षमट्टनजयापभ्राजितेनानेन मात्स्यिकमल्ले कृते जितेऽट्टनेन भृगुकच्छहरण्यां दूरीयकूपिकाग्रामे कार्पासिकमल्ल कृत इति । उज्जयिनीनगर्यां जितशत्रू राजा, तस्याट्टनो मल्ल सर्वराज्येषु अजेय, इतश्च समुद्रतीरे सोपारक नगर, तत्र सिंहगिरी राजा, स च मल्लानां यो जयति तस्मै बहुद्रव्य ददाति, स चाट्टनस्तत्र गत्वा वर्षे २ पताकां हरति ( गृह्णाति ), राजा चिन्तयति–एषोऽन्यस्माद् राज्यादागत्य पताका हरति, एषा ममापभ्राजनेति प्रतिमल्ल मार्गयति, तेनैको मात्स्यिको दृष्टो वसां पिबन्, बल च तस्य परीक्षित, ज्ञात्वा पोषित, पुनरप्यट्टन आगत, स च किल महो भविष्यतीति अनागत एव स्वस्माद् नगराद् आत्मन पथ्यदनस्य गोणीं भृत्वाऽव्याबाधेनायाति,

संपत्तो य सोपारयं, जुद्धे पराजिओ मच्छियमल्लेणं, गओ य सयं आवासं चिंतेइ, एयस्स वुड्ढी तरुणयस्स मम हाणी, अण्णं मल्लं मग्गइ, सुणइ य–सुरट्ठाए अत्थित्ति, एएण भरुयच्छाहरणीए गामे दूरुल्लकूवियाए करिसगो दिट्ठो–एगेण हत्थेण हलं वाहेइ एगेण फलहिओ उप्पाडेइ, तं च दट्ठूण ठिओ पेच्छामि से आहारंति, आवल्ला मुक्का, भज्जा य से भत्तं गहाय आगया, पत्थिया, कूरस्स उज्झमज्जीए घडओ पेच्छइ, जिमिओ सण्णाभूमिं गओ, तत्थवि पेच्छइ सव्वं वत्तियं, वेगालिओ वसहिं तस्स य घरे मग्गइ, दिन्ना, ठिओ, संकहाए पुच्छइ,–का जीविया ?, तेण कहिए भणइ–अहं अट्टणो तुमं ईसरं करेमित्ति, तीसे भज्जाए से कप्पासमोल्लं दिन्नं, अवल्ला य, सा सवल्ला उज्जेणिं गया, वमणविरेयणाणि कयाणि पोसिओ निजुद्धं च सिक्खाविओ, पुणरवि महिमाकाले तेणेव विहिणा आगओ, पढमदिवसे फलहियमल्लो मच्छियमल्लो य जुद्धे एगोवि न पराजिओ, राया विइयदिवसे होहितित्ति अइगओ, इमेवि सए सए आलए गया,

१ सम्प्राप्तश्च सोपारक, युद्धे पराजितो मात्स्यिकमल्लेन, गतश्च स्वकमावास चिन्तयति, एतस्य वृद्धिस्तरुणस्य मम हानि, अन्य मल्ल मार्गयति, शृणोति च–सुराष्ट्रायामस्तीति, एतेन भृगुकच्छहरिण्यां ग्रामे दूरीयकूपिकाया कर्षको दृष्ट–एकेन हस्तेन हल वाहयति एकेन कर्पासमुत्पाटयति, त च दृष्ट्वा स्थित पश्यामि अस्याहारमिति बलीवर्दौ मुक्तौ, भार्या च तस्य भक्त गृहीत्वाऽऽगता, प्रस्थिता, उद्घाटने कूरस्य घट प्रेक्षते, जिमित सञ्ज्ञाभूमिं गत, तत्रापि प्रेक्षते सर्व वर्तित, वैकालिको वसतिं तस्यैव गृहे मार्गयति, दत्ता, स्थित, सकथायां पृच्छति–का जीविका ?, तेन कथिते भणति–अहमट्टनस्त्वामीश्वरं करोमीति, तस्य भार्यायै तेन कर्पासमूल्य दत्त बलीवर्दौ च, सा सबलीवर्दोज्जयिनीं गता ( साऽऽश्वस्ता, तौ उज्जयिनीं गतौ ), वमनविरेचनानि कृतानि, पोषितो नियुद्ध च शिक्षित, पुनरपि महिमकाले तेनैव विधिनाऽऽगत, प्रथमदिवसे कर्पासमल्लो मात्स्यिकमल्लश्च युद्धे एकोऽपि न पराजित, द्वितीयदिवसे भविष्यतीति राजाऽतिगत, इमावपि स्वक आलये गतौ,

अट्टणेण फलहियमल्लो भणिओ–कहेहि पुत्ता ! जं ते दुक्खावियं, तेण कहियं, मक्खित्ताऽक्खेवेणं पुणण्णवीकयं, मच्छियस्सवि रण्णा संमद्दगा पेसिया, भणइ–अहं तस्स पिउपि ण बिभेमि, को सो वराओ ?, वितियदिवसे समजुज्झा, ततियदिवसे अंबियपहारो वइसाहं ठिओ मच्छिओ, अट्टणेण भणिओ फलिहित्ति, तेण फलहिग्गाहेण गहिओ सीसे, तं कुंडियनालगंपिव एगंते पडियं, सक्कारिओ गओ उज्जेणिं, पंचलक्खणाण भोगाण आभागी जाओ, इयरो मओ, एवं जहा पडागा तहा आराहणपडागा, जहा अट्टणो तहा आयरिओ, जहा मल्लो तहा साहू, पहारा अवराहा, जो ते गुरुणो आलोएइ सो निस्सल्लो निव्वाणपडागं तेलोक्करंगमज्झे हरइ, एवं आलोयणं प्रति योगसङ्ग्रहो भवति । एए सीस गुणा, निरवलावस्स जो अन्नस्स न कहेइ एरिसमेतेण पडिसेवियंति, एत्थ उदाहरणगाहा—

दंतपुरदन्तचक्के सच्चवदी दोहले य वणयरए । धणमित्त धणसिरी य पउमसिरी चेव दढमित्तो ॥ १२८० ॥

१ अट्टनेन कर्पासमल्लो भणितः–कथय पुत्र ! यत्ते दु खित, तेन कथित, म्रक्षित्वा अक्षेपेण पुनर्नवीकृत, मात्स्यिकायापि राज्ञा समर्दका प्रेषिता, भणति–अह तस्य पितुरपि न बिभेमि, क स वराक, द्वितीयदिवसे समयुद्धौ तृतीयदिवसे प्रहारार्त्तो वैशाखं स्थितो मात्स्यिक, अट्टनेन भणित –फलिहीति, तेन फलहिग्राहेण गृहीत शीर्षे, तद् कुण्डिकानालमिवैकान्ते पतित, सत्कारितो गत उज्जयिनीं, पञ्चलक्षणानां भोगानामाभागीजात, इतरो मृत, एव यथा पताका तथाऽऽराधनापताका, यथाऽट्टनस्तथा आचार्य, यथा मल्लस्तथा साधु, प्रहारा अपराधाः, यतस्तान् गुरूणामालोचयति स निःशल्यो निर्वाणपताकां त्रैलोक्यरङ्गमध्ये हरति, एवमालोचनां प्रति योगसंग्रहो भवति । एते शिष्यगुणा, निरपलापस्य–योऽन्यस्मै न कथयति–ईदृशमेतेन प्रतिसेवितमिति, अत्रोदाहरणगाथा ।

अस्या व्याख्या—कथानकादवसेया, तच्चेदं–दंतपुरे णयरे दंतचक्को राया, सच्चवई देवी, तीसे दोहलो–कहं दंतमए पासाए अभिरमिज्जइ ?, रायाए पुच्छियं, दंतनिमित्तं घोसावियं रण्णा जहा–उचियं मोल्लं देमि, जो न देइ तस्स राया सरीरनिग्गहं करेइ, तत्थेव णयरे धणमित्तो वाणियओ, तस्स दो भारियाओ, धणसिरी महंती पउमसिरी तु डहरिया पीययरी यत्ति, अण्णया सवत्तीणं भंडणं, धणसिरी भणइ–किं तुमं एवं गविया ? किं तुज्झ महाओ अहियं, जहा सच्चवईए तहा ते किं पासाओ कीरेज्जा ?, सा भणइ–जइ न कीरइ तो अहं नेवत्ति उवगरए ( घरए ) वारं बंधित्ता ठिया, वाणियओ आगओ पुच्छइ–कहिं पउमसिरी ?, दासीहिं कहियं, तत्थेव अइयओ, पसाएइ, न पसीयइत्ति, जइ नत्थि न जीवामि, तस्स मित्तो दढमित्तो नाम, सो आगओ, तेण पुच्छियं, सव्वं कहेइ, भणइ–कीरउ, मा इमाए मरंतीए तुमंपि मरिज्जासि, तुमंमि मरंते अहं, रायाए य घोसावियं, तो पच्छन्नं कायव्वं ताहे सो दढमित्तो पुलिंदगपाउग्गाणि

१ दन्तपुरे नगरे दन्तचक्रो राजा, सत्यवती देवी, तस्या दोहदः कथं दन्तमये प्रासादेऽभिरमे, राज्ञा पृष्टं, दन्तनिमित्तं घोषितं राज्ञा यथा उचितं मूल्यं ददामि, यो न दास्यति तस्य राजा शरीरनिग्रहं करोति, तत्रैव नगरे धनमित्रो वणिक्, तस्य द्वे भार्ये, धनश्रीर्महती पद्मश्रीस्तु लघ्वी प्रियतरा चेति, अन्यदा सपत्न्योर्भण्डनं, धनश्रीर्भणति–किं त्वमेव गर्विता ? किं तव मत्तः अधिकं, यथा सत्यवत्यास्तथा किं प्रासादः क्रियते ?, सा भणति–यदि न क्रियते तदाऽहं नेपथ्यापवरके द्वारं बद्ध्वा स्थिता, वणिगागतः पृच्छति–क्व पद्मश्रीः ?, दासीभिः कथितं, तत्रैवाभिगतः, प्रसादयति, न प्रसीदतीति, यदि नास्ति न जीवामि, तस्य मित्रं दृढमित्रो नाम, स आगतः, तेन पृष्टं, सर्वं कथयति, भणति–क्रियतां, माऽस्यां म्रियमाणायां त्वमपि मृथाः, त्वयि म्रियमाणेऽहं, राज्ञा च घोषितं, तत् प्रच्छन्नं कर्तव्यं, तदा स दृढमित्रः पुलिन्द्रप्रायोग्याणि

मणीयमलत्तगं कंकणं च गहाय अडविं गओ, दंता लद्धा पुंजो कओ, तेण तणपिंडिगाण मज्झे वंधित्ता सगडं भरेत्ता आणीया, णयरे पवेसिज्जंतेसु वसहेण तणपिडगा कड्डिया, तओ खडत्ति दंतो पडिओ, नगरगोत्तिएहिं दिट्ठो गहिओ रायाए उवणीओ, वज्झो णीणिज्जइ, धणमित्तो सोऊण आगओ, रायाए पायवडिओ विन्नवेइ, जहा एए मए आणाविया, सो पुच्छिओ भणइ–अहमेयं न याणामि कोत्ति, एवं ते अन्नोप्परं भणंति, रायाए सवहसाविया पुच्छिया, अभओ दिण्णो, परिकहियं, पूएत्ता विसज्जिया, एवं निरवलावेण होयव्वं आयरिएणं। बितिओ–एगेण एगस्स हत्थे भाणं वा किंचि पणामियं, अंतरा पडियं, तत्थ भाणियव्वं–मम दोसो इयरेणावि ममंति। निरवलावेत्ति गयं २। इयाणि आवईसु दढधम्मत्तणं कायव्वं, एवं जोगा संगहिया भवंति, ताओ य आवइओ चत्तारि, तं०–दव्वावई ४, उदाहरणगाहा—

उज्जेणीए धणवसु अणगारे धम्मघोस चंपाए। अडवीए सत्थविब्भम वोसिरणं सिज्झणा चेव ॥ १२८१ ॥

१ मणिकामलक्तकं कङ्कणानि च गृहीत्वाऽटवीं गतः, दन्ता लब्धाः पुञ्जः कृतः, तेन तृणपिण्डीनां मध्ये बद्ध्वा शकटं भृत्वाऽऽनीता, नगरे प्रविश्यमानेषु वृषभेण तृणपिण्ड्य कृष्टा, ततः खटदिति दन्तः पतितः, नगरगुप्तिकैर्दृष्टो गृहीतश्च, राज्ञ उपनीतः, वध्यो निष्काश्यते, धनमित्रः श्रुत्वाऽऽगतः, राज्ञः पादयोः पतितो विज्ञपयति–यथा मयैते आनायिताः, स पृष्टो भणति–अहमेनं न जानामि क इति, एवं तौ परस्परं भणतः, राज्ञा शपथशापितौ पृष्टौ, अभयं दत्तं, परिकथितं, पूजयित्वा विसृष्टौ। एवं निरपलापेन भवितव्यमाचार्येण। द्वितीयः–एकेनैकस्य हस्ते भाजनं वा किञ्चिद्दत्तं, अन्तरा पतितं, तत्र भणितव्यं–मम दोषः, इतरेणापि ममेति। निरपलापमिति गतम् २। इदानीमापत्सु दृढधर्मता कर्तव्या, एवं योगाः संगृहीता भवन्ति, ताश्चापदश्चतस्रः, तद्यथा–द्रव्यापद् ४, उदाहरणगाथा–

अस्या व्याख्या कथानकादवसेया, तच्चेदं–उज्जेणी णयरी, तत्थ वसू वाणियओ, सो चंपं जानुकामो उग्घोसणं कारेइ जह [ नाए ] धन्नो, एयं अणुन्नवेइ धम्मघोसो नामणगारो, तेसु दूरं अडविमइगएसु पुलिंदेहिं विलोलिओ सत्थो इओ तइओ नट्ठो, सो अणगारो अण्णेण लोएण समं अडविं पविट्ठो, ते मूलाणि खायंति पाणियं च पियंति, सो निमंतिज्जइ, नेच्छइ आहारज्जाए, एगत्थ सिलायले भत्तं पच्चक्खायं, अदीणस्स अहियासेमाणस्स केवलणाणमुप्पण्णं सिद्धो, दढधम्मयाए जोगा सगहिया, एसा दव्वावई, खेत्तावई खेत्ताणं असईए कालावई ओमोदरियाइ, भावावईए उदाहरणगाहा—

महुराए जउण राया जउणावंकेण दंडमणगारे। वहणं च कालकरणं सक्कागमणं च पव्वज्जा ॥ १२८२ ॥

व्याख्या कथानकादवसेया, तच्चेदं–महुराए णयरीए जउणो राया, जउणावंकं उज्जाणं अवरेण, तत्थ जउणाए कोप्परो दिण्णो, तत्थ दंडो अणगारो आयावेइ, सो रायाए नितेण दिट्ठो, तेण रोसेण असिणा सीसं छिन्नं, अन्ने भणंति–फलेण आहओ, सव्वेहिवि मणुस्सेहि पत्थररासी कओ, कोवोदयं पइ तस्स आवई, कालगओ सिद्धो, देवागमणं महिमाकरणं

१ उज्जयिनी नगरी, तत्र वसुर्वणिक्, स चम्पां यातुकाम उद्घोषणां कारयति, यथा धन्यः, एतमनुज्ञापयति धर्मघोषो नामानगारः, तेषु दूरमटवीमतिगतेषु पुलिन्द्रैर्विलोलितः सार्थ इतस्ततो नष्टः, सोऽनगारोऽन्येन लोकेन सममटवीं प्रविष्टः, ते मूलानि खादन्ति पानीयं च पिबन्ति, स निमन्त्र्यते, नेच्छति आहारजातं, एकत्र शिलातले भक्तं प्रत्याख्यातं, अदीनस्याध्यासीनस्य केवलज्ञानमुत्पन्नं सिद्धः, दृढधर्मतया योगाः संगृहीताः, एषा द्रव्यापद्, क्षेत्रापत् क्षेत्राणामसति कालापत् अवमोदरिकादि भावापद्युदाहरणगाथा। २ मथुरायां नगर्यां यमुनो राजा यमुनावक्रमुद्यानमपरस्यां, तत्र यमुनायां स्कन्धावारो दत्तः, तत्र दण्डोऽनगार आतापयति, स राज्ञा निर्गच्छता दृष्टः, तेन रोषेणासिना शीर्षं छिन्नं, अन्ये भणन्ति–बीजपूरेणाहतः, सर्वैरपि मनुष्यैः प्रस्तरराशिः कृतः, कोपोदयं प्रति तस्यापत्, कालगतः सिद्धः, देवागमनं महिमकरणं

खद्धं वत्ता भवइ आसायणा सेहस्स, इमं च खद्धं—प्रभूतशब्देनं खरकक्कसनिट्ठुरं भणइ २०, 'तत्थ गए'त्ति सेहे राइणिए वाहरिए जत्थ गए सुणइ तत्थ गए चेव उल्लावं देइ आसायणा सेहस्स २१, 'किंति'त्ति सेहे राइणिएण आहूए किंति वत्ता भवइ आसायणा सेहस्स, किंति—किं भणसित्ति भणइ, मत्थएण वंदामोत्ति भणियव्वं २२, 'तुमं'ति सेहे राइणियं तुमंति वत्ता भवइ आसायणा सेहस्स, को तुमंति चोएत्तए, २३ 'तज्जाए'त्ति सेहे राइणियं तज्जाएणं पडिहणित्ता भवति आसायणा सेहस्स, 'तज्जाएणं'ति कीस अज्जो! गिलाणस्स न करेसि?, भणइ—तुमं कीस न करेमि?, आयरिओ भणइ—तुमं आलसिओ, सो भणइ—तुमं चेव आलसिओ इत्यादि २४, 'णो सुमणो'त्ति सेहे राइणियस्स कहं कहेमाणस्स नो सुमणसो भवइ आसायणा सेहस्स, इह नो सुमणसेत्ति ओहयमणसंकप्पे अच्छइ न अणुवूहइ कहं अहो सोहणं कहियंति २५, 'णो सरसि'त्ति सेहे राइणियस्स कहं कहेमाणस्स णो समरसित्ति वत्ता भवइ आसायणा सेहस्स, इह च 'णो सुमरसि'त्ति न सुमरसि तुमं एयं अत्थं,

१ खद्धं वक्ता भवति आशातना शैक्षस्य, इदं च खद्धं—प्रभूतशब्देन खरकर्कशनिष्ठुरं भणति २०, 'तत्र गते' इति शैक्षो रात्निकेन व्याहृतो यत्र गतः शृणोति तत्र गत एवोल्लापं ददाति आशातना शैक्षस्य २१, 'किं' मितीति शैक्षो रात्निकेनाहूतः किमिति वक्ता भवत्याशातना शैक्षस्य, किमिति किं भणसीति भणति, मस्तकेन वन्दे इति भणितव्यं २२, 'त्व'मिति शैक्षो रात्निकं त्वमिति वक्ता भवति आशातना शैक्षस्य, कस्त्वमिति नोदयिता २३, 'तज्जात' इति शैक्षो रात्निकं तज्जातेन प्रतिहन्ता भवत्याशातना शैक्षस्य, तज्जातेनेति कथमार्य! ग्लानस्य न करोषि?, भणति—त्वं कथं न करोषि?, आचार्यो भणति—त्वमलसः, स भणति—त्वमेवालस इत्यादि २४, 'न सुमना' इति शैक्षो रात्निके कथां कथयति नो सुमना भवत्याशातना शैक्षस्य, इह न सुमना इति उपहतमनःसङ्कल्पस्तिष्ठति नानुबृंहति कथां अहो शोभनं कथितमिति २५, न स्मरसीति शैक्षो रात्निके कथां कथयति न स्मरसीतियक्ता भवति आशातना शैक्षस्य, इह च न स्मरसीति न स्मरसि त्वमेनमर्थं

न एस एवं भवइ २६, कहं छेत्त'त्ति रायणियस्स कहं कहेमाणस्स तं कहं अच्छिंदित्ता भवइ आसायणा सेहस्स, अच्छिंदित्ता भवइत्ति भणइ अहं कहेमि २७, 'परिसं भेत्ते'ति रायणियस्स कहं कहेमाणस्स परिसं भेत्ता भवति आसायणा सेहस्स, इह च परिसं भेत्तत्ति एवं भणइ—भिक्खावेला समुद्दिसणवेला सुत्तत्थपोरिसिवेला, भिंदइ वा परिसं २८, 'अणुट्ठियाए कहेइ' राइणियस्स कहं कहेमाणस्स तीए परिसाए अणुट्ठियाए अवोच्छिन्नाए अवोगडाए दोच्चंपि तच्चंपि कहं कहेत्ता भवइ आसायणा सेहस्स, इह तीसे परिसाए अणुट्ठियाएत्ति—निविट्ठाए चेव अवोच्छिन्नाएत्ति—जावेगोवि अच्छइ अवोगडाएत्ति अविसंसारियत्ति भणियं होइ, दोच्चंपि तच्चंपि—विहिं तिहिं चउहिं तमेवत्ति जो आयरिएण कहिओ अत्थो तमेवाहिगारं विगप्पइ, अयमवि पगारो अयमवि पगारो तस्सेवेगस्स सुत्तस्स २९, 'संथारपायघट्टण'त्ति सेज्जासंथारगं पाएण संघट्टेत्ता हत्थेण ण अणुण्णवित्ता भवइ आसायणा सेहस्स, इह च सेज्जा—सव्वंगिया संथारो—अड्ढाइज्जहत्थो जत्थ वा

१ नैप एवं भवति २६, कथां छेत्तेति रात्निके कथां कथयति तां कथां छेदयति आशातना शैक्षस्य, आच्छेत्ता भवतीति भणति—अहं कथयामि २७, पर्षद् भेत्तेति रात्निके कथां कथयति पर्षदो भेत्ता भवति आशातना शैक्षस्य, इह च पर्षदो भेत्तेति एवं भणति—भिक्षावेला भोजनवेला सूत्रार्थपौरुषीवेला, भिनत्ति वा पर्षदं २८, अनुत्थितायां कथयति रात्निके कथां कथयति तस्यां पर्षदि अनुत्थितायामव्युच्छिन्नायामव्याकृतायां ( असविप्रकीर्णायां ) द्विरपि त्रिरपि कथायाः कथयिता भवत्याशातना शैक्षस्य, इह तस्यां पर्षदि अनुत्थितायामिति निविष्टायामेव अव्युच्छिन्नायामिति यावदेकोऽपि तिष्ठति, अव्याकृतायामिति अविसरतायामिति भणितं भवति, द्विरपि त्रिरपि—द्विकृत्वस्त्रिकृत्वः चतुर्भिः तमेवेति य आचार्येण कथितोऽर्थस्तमेवाधिकारं विकल्पयति, अयमपि प्रकार अयमपि प्रकारः तस्यैवैकस्य सूत्रस्य २९, संस्तारपादघट्टनमिति शय्यासंस्तारकौ पादेन संघट्टयित्वा हस्तेन नानुज्ञापयिता भवति आशातना शैक्षस्य, इह च शय्या—सर्वाङ्गिकी संस्तारक—अर्धतृतीयहस्तः यत्र वा

ठाणे अच्छइ संथारो विदलकट्ठमओ वा, अहवा सेज्जा एव संथारओ तं पाएण संघट्टेइ, णाणुजाणावेइ—न खामेइ, भणियं च—'संघट्टेत्ताण काएणे' त्यादि ३०, 'चेट्ठ'त्ति सेहे राइणियस्स सेज्जाए संथारे वा चिट्ठित्ता वा निसिइत्ता वा तुयट्टित्ता वा भवइ आसायणा सेहस्स ३१, 'उच्च'त्ति सेहे राइणियस्स उच्चासणं चिट्ठित्ता वा निसिइत्ता वा भवइ आसायणा सेहस्स ३२, 'समासणे यावि'त्ति सेहे राइणियस्स समासणं चिट्ठित्ता वा निसीइत्ता वा तुयट्टित्ता वा भवइ आसायणा सेहस्सत्ति ३३ गाथात्रितयार्थः ॥ ॥ सूत्रोक्ताशातनासम्बन्धाभिधित्सयाह सङ्ग्रहणिकारः—

अहवा—अरहंताण आसायणादि सज्झाएँ किंचिणाहीयं । जा कंठसमुद्दिट्ठा तेत्तीसासायणा एया ॥ १ ॥ प्रतिक्रमणसङ्ग्रहणी समाप्ता ॥

व्याख्या—अथवा—अयमन्यः प्रकारः, 'अर्हतां' तीर्थकृतामाशातना, आदिशब्दात्सिद्धादिग्रहः यावत्स्वाध्याये किञ्चिन्नाधीतं 'सज्झाए ण सज्झाइयंति वुत्तं भवइ,' एताः 'कण्ठसिद्धाः' निगदसिद्धा एवेत्यर्थः, त्रयस्त्रिंशदाशातना इति गाथार्थः ॥ साम्प्रतं सूत्रोक्ता एव त्रयस्त्रिंशद्व्याख्यायन्ते, तत्र—

१ स्थाने तिष्ठति संस्तारको द्विदलकाष्ठमयो वा, अथवा शय्यैव संस्तारकः तं पादेन संघट्टयति, नानुज्ञापयति—न क्षमयति, भणितं च 'कायेन संघट्टयित्वे'त्यादि ३०, स्थातेति शैक्षो रात्निकस्य शय्यायां संस्तारके वा स्थाता वा निषीदयिता वा त्वग्वर्त्तयिता वा भवत्याशातना शैक्षस्य ३१, उच्च इति शैक्षो रात्निकासनात् उच्च आसने स्थाता निषीदयिता वा भवत्याशातना शैक्षस्य ३२, समासने चापीति शैक्षो रात्निकासनस्य समे आसने स्थाता वा निषीदयिता वा त्वग्वर्त्तयिता वा भवत्याशातना शैक्षस्येति ।

अरिहंताणं आसायणाए सिद्धाणं आसायणाए आयरियाणं आसायणाए उवज्झायाणं आसायणाए साहूणमासायणाए साहुणीणं आसायणाए सावगाणं आसायणाए सावियाणं आसायणाए देवाणं आसायणाए देवीणं आसायणाए इहलोगस्सासायणाए परलोगस्स आसायणाए केवलिपन्नत्तस्स धम्मस्स आसायणाए सदेवमणुयासुरस्स लोगस्स आसायणाए सव्वपाणभूयजीवसत्ताणं आसायणाए कालस्स आसायणाए सुयस्स आसायणाए सुयदेवयाए आसायणाए वायणायरियस्स आसायणाए ( सूत्रं )

अर्हतां—प्राग्निरूपितशब्दार्थानां सम्बन्धिन्याऽऽशातनया यो मया दैवसिकोऽतिचारः कृतस्तस्य मिथ्या दुष्कृतमिति क्रिया, एवं सिद्धादिपदेष्वपि योज्यते, इत्थं चाभिदधतोऽर्हतामाशातना भवति—नत्थी अरहंतत्ती जाणंतो कीस भुंजई भोए। पाहुडियं उवजीवे एव वयंतुत्तरं इणमो ॥ १ ॥ भोगफलं निव्वत्तियपुण्णपगडीणमुदयवाहल्ला। भुंजइ भोए एवं पाहुडियाए इमं सुणसु ॥ २ ॥ णाणाइअणवरोहकअघातिसुहपायवस्स वेयाए। तित्थंकरनामाए उदया तह वीयरायत्ता ॥ ३ ॥ सिद्धानामाशातनया, क्रिया पूर्ववत्—सिद्धाणं आसायण एव भणंतस्स होइ मूढस्स। नत्थी निच्चेट्ठा

१ न सन्ति अर्हन्त इति जानानो वा कथं भुङ्क्ते भोगान्? । प्राभृतिकां ( समवसरणादिरूपां ) उपजीवति कथं ? एवं वदत उत्तरमिदम् ॥ १ ॥ निर्वर्तितभोगफलपुण्यप्रकृतीनामुदयबाहुल्यात्। भुङ्क्ते भोगान् एवं प्राभृतिकायां इदं शृणु ॥ २ ॥ ज्ञानादीनामनवरोधकाघातिसुखपादपस्य वेदनाय। तीर्थकरनाम्न उदयात् तथा वीतरागत्वात् ॥ ३ ॥ सिद्धानामाशातना एवं भणतो भवति मूढस्य। न सन्ति निश्चेष्टा

वा सइनाणी अहव उवओगे ॥ १ ॥ रागद्दोसधुवत्ता तहेव अण्णन्नकालमुवओगो। दंसणणाणाणं तू होइ असव्वण्णुया चेव ॥ २ ॥ अण्णोण्णावरणभ(ता)वा एगत्त वावि णाणदंसणओ। भण्णइ नवि एएसिं दोसो एगोवि संभवइ ॥ ३ ॥ अत्थित्ति नियम सिद्धा सद्दाओ चेव गम्मए एवं। निच्चिट्ठावि भवंती वीरियक्खयओ न दोसो हु ॥४॥ रागद्दोसो न भवे सयकसायाण निरवसेसखया। जियसाभव्वा ण जुगवमुवओगो नयमयाओ य ॥ ५ ॥ न पिहुआवरणाओ दव्वट्ठिनयस्स वा मएणं तु। एगत्तं वा भवई दंसणणाणाण दोण्हंपि ॥ ६ ॥ णाणणय दंसणणए पडुच्च णाणं तु सव्वमेवेयं। सव्वं च दंसणंती एवमसव्वण्णुया का उ? ॥ ७ ॥ पासणयं व पडुच्चा जुगवं उवओग होइ दोण्हंपि। एवमसव्वण्णुत्ता एसो दोसो न संभवइ ॥ ८ ॥ आचार्याणामाशातना, क्रिया पूर्ववत्, आशातना तु—डहरो अकुलीणोत्ति य दुम्मेहो दमगमंदवुद्धित्ति। अविय(प्प)लाभलद्धी सीसो परिभवइ आयरिए ॥ १ ॥ अहवावि वए एवं उवएस परस्स देंति एवं तु। दसविहवेयावच्चे कायवे

१ वा सदा वाऽपि उपयोगेऽथवा ॥ १ ॥ ध्रुवरागद्वेषवत्त्वात्तथैवान्यान्यकाल उपयोगात्। दर्शनज्ञानयोस्तु भवत्यसर्वज्ञतैव ॥ २ ॥ अन्योऽन्यावारकता वा एकत्व वाऽपि ज्ञानदर्शनयो। भण्यते नैवैतेषां दोष एकोऽपि संभवति ॥ ३ ॥ सन्तीति नियमतः सिद्धा शब्दादेव गम्यन्ते एवम्। निश्चेष्टा अपि भवन्ति वीर्यक्षयतो नैव दोषः ॥ ४ ॥ रागद्वेषौ न स्यातां सर्वकषायाणां निरवशेषक्षयात्। जीवस्वाभाव्यात् नोपयोगयौगपद्यं नयमताच्च ॥ ५ ॥ न पृथगावरणात् ( ऐक्य ) द्रव्यार्थिकनयस्य वा मतेन तु। एकत्वं वा भवति ज्ञानदर्शनयोर्द्वयोरपि ॥ ६ ॥ ज्ञाननयं प्रतीत्य सर्वमेवेदं ज्ञानं दर्शननयं प्रतीत्य सर्वमेवेदं दर्शनमिति एवमसर्वज्ञता का तु? ॥ ७ ॥ पश्यत्तां वा प्रतीत्य युगपदुपयोगो भवति द्वयोरपि। एवमसर्वज्ञता एष दोषो न संभवति ॥ ८ ॥ बालोऽकुलीन इति च दुर्मेधा द्रमको मन्दबुद्धिरिति। अपि चाल्पलाभलब्धि शिष्य परिभवत्याचार्यान् ॥ १ ॥ अथवाऽपि वदत्येव—उपदेशं परस्मै ददति एवं तु। दशविध वैयावृत्त्यं कर्तव्यं

सयं न कुव्वंति ॥ २ ॥ डहरोवि णाणवुड्ढो अकुलीणोत्ति य गुणालओ किह णु?। दुम्मेहाईणिवि नेवं भणंतऽसंताइ दुम्मेहो ॥ ३ ॥ जाणंति नविय एवं निद्धम्मा मोक्खकारणं णाणं। निच्चं पगासयंता वेयावच्चाइ कुव्वंति ॥ ४ ॥ उपाध्यायानामाशातनया, क्रिया पूर्ववत्, आशातनाऽपि साक्षेपपरिहारा यथाऽऽचार्याणां नवरं सूत्रप्रदा उपाध्याया इति, साधूनामाशातनया, क्रिया पूर्ववत्,—जोऽमुणियसमयसारो साहुसमुद्दिस्स भासए एवं। अविसहणातुरियगई भंडणमामुंडणा चेव ॥ १ ॥ पाणसुणया व भुंजंति एगओ तह विरूवनेवत्था। एमाइ वयदवण्णं मूढो न मुणेइ एयं तु ॥ २ ॥ अविसहणादिसमेया संसारमहावजाणणा चेव। साहू चेवऽकसाया जओ पभुंजंति ते तहवि ॥ ३ ॥ साध्वीनामाशातनया, क्रिया पूर्ववत्,—कलहणिया बहुउवही अहवावि समणुवद्दवो समणी। गणियाण पुत्तभण्डा दुमवेल्लि जलस्स सेवालो ॥ १ ॥ अत्रोत्तरं—कलहंति नेव नाऊण कसाए कम्मबंधवीए उ। संजलणाणमुदयओ ईसिं कलहेवि को दोसो? ॥ २ ॥ उवही य बहुविगप्पो बंभव्वयरक्खणत्थमेयासि। भणिओ जिणेहि जम्हा तम्हा उवहिंमि नो दोसो ॥ ३ ॥ समणाण नेय एया उवद्दवो

१ स्वयं न कुर्वन्ति ॥ २ ॥ बालोऽपि ज्ञानवृद्धोऽकुलीन इति गुणालय कथं नु?। दुर्मेधआदीन्यपि नैव भणति असन्ति दुर्मेधसः ॥ ३ ॥ जानन्ति नापि चैव च निर्धर्माणो मोक्षकारणं ज्ञानं। नित्यं प्रकाशयन्तो वैयावृत्त्यादि कुर्वन्ति ॥ ४ ॥ योऽज्ञातसमयसारः साधून् समुद्दिश्य भाषते एवम्। अविषहणा अत्वरितगतय भण्डनमामुण्डनं चैव ॥ १ ॥ पाणा इव श्वान इव भुञ्जन्ति एकतस्तथा विरूपनेपथ्या। एवमादि वदत्यवर्णं मूढो न जानात्येतत्तु ॥ २ ॥ अविषहणादिसमेता संसारस्वभावज्ञा एव। साधव एवाकषाया यतोऽत प्रभुञ्जन्ति ते तथैव ॥ ३ ॥ कलहकारिका बहूपधिका अथवाऽपि श्रमणोपद्रव श्रमणी। गणिकानां पुत्रभाण्डा द्रुमस्य वल्ली जलस्य शेवालः ॥ १ ॥ कषायान् कर्मबन्धबीजानि ज्ञात्वा नैव कलहयन्ति। संज्वलनानामुदयात् ईषत् कलहेऽपि को दोषः? ॥ २ ॥ उपधिश्च बहुविकल्पो ब्रह्मव्रतरक्षणार्थमेतासाम्। भणितो जिनैर्यस्मात् तस्मादुपधौ न दोषः ॥ ३ ॥ श्रमणानां नैता उपद्रव

सम्ममणुसरंताणं । आगमविहिं महत्थं जिणवयणसमाहियप्पाणं ॥ ४॥ श्रावकाणामाशातनया, क्रिया तथैव, जिनशासनभक्ता गृहस्थाः श्रावका उच्यन्ते, आशातना तु–लद्धूण माणुसत्तं नाऊणवि जिणमयं न जे विरई । पडिवज्जंति कहं ते धण्णा वुच्चंति लोगंमि ? ॥ १ ॥ सावगसुत्तासायणमत्थुत्तरं कम्मपरिणइवसाओ । जइवि पवज्जंति न तं तहावि धण्णत्ति मग्गठिया ॥ २ ॥ सम्यग्दर्शनमार्गस्थितत्वेन गुणयुक्तत्वादित्यर्थः. श्राविकाणामाशातनया, क्रियाऽऽक्षेपपरिहारौ पूर्ववत्, देवानामाशातनया, क्रिया तथैव, आशातना तु–कामपसत्ता विरईए वज्जिया अणिमिसा य निच्चिट्ठा । देवा सामत्थंमिवि न य तित्थस्सुन्नइकरा य ॥ १ ॥ एत्थ पसिद्धी मोहणियसायवेयणियकम्मउदयाओ । कामपसत्ता विरई कम्मोदयउ च्चिय न तेसिं ॥ २ ॥ अणिमिस देवसहावा णिच्चिट्ठाणुत्तरा उ कयकिच्चा । कालाणुभावा तित्थुन्नईवि अन्नत्थ कुव्वंति ॥ ३ ॥ देवीनामाशातनया, क्रियाक्षेपपरिहारौ प्राग्वत् । इहलोकस्याऽऽशातनया, क्रिया प्राग्वत् । इहलोको–मनुष्यलोकः, आशातना तस्य वितथप्ररूपणादिना, परलोकस्याऽऽशातनया, प्राग्वत्, परलोकः–नारकतिर्यगमराः, आशातना तस्य वितथप्ररूपणादिनैव, द्वितयेऽप्याक्षेपपरिहारौ स्वमत्या कार्यौ । केवलिप्रज्ञप्तस्य धर्मस्याऽऽशातनया, क्रिया प्राग्वत्, स च धर्मो

१ सम्यगनुसरता। आगमविधि महार्थं जिनवचनसमाहितात्मना ॥ ४ ॥ लब्ध्वा मानुष्य ज्ञात्वाऽपि जिनवचन न ये विरतिं। प्रतिपद्यन्ते कथ ते धन्या उच्यन्ते लोके? ॥ १ ॥ श्रावकाशातनासूत्रमत्रोत्तर कर्मपरिणतिवशात् । यद्यपि न ता प्रतिपद्यन्ते तथापि धन्या मार्गस्थिता इति ॥ २ ॥ कामप्रसक्ता विरत्या वर्जिता अनिमेषा निश्चेष्टा । देवा सामर्थ्येऽपि न च तीर्थोन्नतिकारकाश्च ॥ १ ॥ अत्रोत्तर मोहनीयसातवेदनीयकर्मोदयात् । कामप्रसक्ता विरतिश्च कर्मोदयत एव न तेषाम् ॥ २ ॥ अनिमेषा देवस्वाभाव्यात् निश्चेष्टा अनुत्तरास्तु कृतकृत्या । कालानुभावात् तीर्थोन्नतिमपि अन्यत्र कुर्वन्ति ॥ ३ ॥

द्विविधः–श्रुतधर्मश्चारित्रधर्मश्च, आशातना तु–पाययसुत्तनिवद्धं को वा जाणेइ पणीय केणेयं ? । किं वा चरणेणं तू दाणेण विणा उ हवइत्ति ॥१॥ उत्तरं—"बालस्त्रीमूढ(मन्द)मूर्खाणां, नृणां चारित्रकाङ्क्षिणाम् । अनुग्रहार्थं तत्त्वज्ञैः, सिद्धान्तः प्राकृतः कृतः ॥ १ ॥" निपुणधर्मप्रतिपादकत्वाच्च सर्वज्ञप्रणीतत्वमिति, चरणमाश्रित्याह—'दानमौरभ्रिकेणापि, चाण्डालेनापि दीयते । येन वा तेन वा शीलं, न शक्यमभिरक्षितुम् ॥ १ ॥ दानेन भोगानाप्नोति, यत्र यत्रोपपद्यते । शीलेन भोगान् स्वर्गं च, निर्वाणं चाधिगच्छति ॥ २ ॥ तथाऽभयदानदाता चारित्रवान्नियत एवेति । सदेवमनुष्यासुरस्य लोकस्याऽऽशातनया, क्रिया प्राग्वत्, आशातना तु वितथप्ररूपणादिना, आह च भाष्यकारः—

देवादीयं लोयं विवरीयं भणइ सत्तदीवुदही । तह कइ पयावईणं पयईपुरिसाण जोगो वा ॥ २१३ ॥
उत्तरं–सत्तासु परिमियसत्ता मोक्खो सुण्णत्तणं पयावइ य । केण कउत्ताऽणवत्था पयडीए कहं पवित्तित्ति ? ॥२१४॥
जमचेयणत्ति पुरिसत्थनिमित्तं किल पवत्तती सा य । तीसे च्चिय अपवित्ती परोत्ति सव्वं च्चिय विरुद्धं॥२१५॥ (भा०)

सर्वप्राणभूतजीवसत्त्वानामाशातनया, क्रिया प्राग्वत्, तत्र प्राणिनः–द्वीन्द्रियादयः व्यक्तोच्छ्वासनिःश्वासा अभूवन् भवन्ति भविष्यन्ति चेति भूतानि–पृथिव्यादयः जीवन्ति जीवा–आयुःकर्मानुभवयुक्ताः सर्व एवेत्यर्थः सत्त्वाः–सांसारिकसंसा-

१ प्राकृत सूत्रनिबन्ध इति को वा जानाति केनेद प्रणीतमिति । किं वा चारित्रेणेव दानेन विना भवति तु ॥ १ ॥ देवादिक लोक विपरीत वदति सप्त द्वीपोदधय । तथा कृति प्रजापते प्रकृतिपुरुषयो सयोगो वा ॥ १ ॥ उत्तर–सप्तसु परिमिता सत्त्वा अमोक्ष शून्यत्व वा प्रजापतिश्च । केन कृत इत्यनवस्था प्रकृते कथ प्रवृत्तिरिति ? ॥ २ ॥ यदचेतनेति पुरुषार्थनिमित्त किल प्रवर्त्तते सा च । तस्या एवाप्रवृत्तावितरोऽपि सर्वमेवेव विरुद्धम् ॥ ३ ॥

रातीतभेदाः, एकार्थिका वा ध्वनय इति, आशातना तु विपरीतप्ररूपणादिनैव, तथाहि–अङ्गुष्ठपर्वमात्रो द्वीन्द्रियाद्यात्मेति, पृथिव्यादयस्त्वजीवा एव, स्पन्दनादिचैतन्यकार्यानुपलब्धेः, जीवाः क्षणिका इति, सत्त्वाः संसारिणोऽङ्गुष्ठपर्वमात्रा एव भवन्ति, संसारातीता न सन्त्येव, अपि तु प्रध्यातदीपकल्पोपमो मोक्ष इति, उत्तरं—देहमात्र एवात्मा, तत्रैव सुखदुःखादितत्कार्योपलब्धेः, पृथिव्यादीना त्वल्पचैतन्यत्वात् कार्यानुपलब्धिर्नाजीवत्वादिति, जीवा अप्येकान्तक्षणिका न भवन्ति, निरन्वयनाशे उत्तरक्षणस्यानुत्पत्तेर्निर्हेतुकत्वादेकान्तनष्टस्यासदविशेषत्वात्, सत्त्वाः संसारिणः ( देहप्रमाणाः ), प्रत्युक्ता एव संसारातीता अपि विद्यन्त एवेति, जीवस्य सर्वथा विनाशाभावात्, तथाऽन्यैरप्युक्तं–"नासतो विद्यते भावो, नाभावो विद्यते सतः । उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ १ ॥" इत्यादि । कालस्याऽऽशातनया, क्रिया पूर्ववत्, आशातना तु नास्त्येव काल इति कालपरिणतिर्वा विश्वमिति, तथा च दुर्नयः—"कालः पचति भूतानि, कालः संहरते प्रजाः । कालः सुप्तेषु जागर्ति, कालो हि दुरतिक्रमः ॥ १ ॥" इत्यादि, उत्तरं—कालोऽस्ति, तमन्तरेण बकुलचम्पकादीनां नियतः पुष्पादिप्रदानभावो न स्यात्, न च तत्परिणतिर्विश्वं, एकान्तनित्यस्य परिणामानुपपत्तेः । श्रुतस्याऽऽशातनया, क्रिया पूर्ववत्, आशातना तु–को आउरस्स कालो ? मइलंबरधोवणे य को कालो ? । जइ मोक्खहेउ नाणं को कालो तस्सऽकालो वा ? ॥ १ ॥ इत्यादि, उत्तरं—जोगो जोगो जिणसासणंमि दु.क्खखया पउंजंतो । अण्णोण्णमवाहाए

१ क आतुरस्य ( औषधादाने ) कालो मलिनाम्बरप्रक्षालने च क काल । यदि मोक्षहेतुर्ज्ञान कस्तस्य कालोऽकालो वा ?, ॥ १ ॥ दु खक्षयकारणात् प्रयुज्यमानो योगो जिनशासने योग्य । अन्योऽन्याबाधया

असवत्तो होइ कायव्वो ॥ २ ॥ प्राग् धर्मद्वारेण श्रुताशातनोक्ता इह तु स्वतन्त्रविषयेति न पुनरुक्तं । श्रुतदेवताया आशातनया, क्रिया पूर्ववत्, आशातना तु श्रुतदेवता न विद्यतेऽकिञ्चित्करी वा, उत्तरं—न ह्यनधिष्ठितो मौनीन्द्रः खल्वागमः अतोऽसावस्ति, न चाकिञ्चित्करी, तामालम्ब्य प्रशस्तमनसः कर्मक्षयदर्शनात् । वाचनाचार्यस्याऽऽशातनया, क्रिया पूर्ववत्, तत्र वाचनाचार्यो ह्युपाध्यायसंदिष्टो य उद्देशादि करोति, आशातना त्वियं—निर्दुःखसुखः प्रभूतान् वारान् वन्दनं दापयति, उत्तरं—श्रुतोपचार एषः क इव तस्यात्र दोष इति—

**जं वाइद्धं वच्चामेलियं हीणक्खरियं अच्चक्खरियं पयहीणं विणयहीणं घोसहीणं जोगहीणं सुट्ठुदिन्नं दुट्ठु पडिच्छियं अकाले कओ सज्झाओ काले न कओ सज्झाओ असज्झाए सज्झाइयं सज्झाए न सज्झाइयं तस्स मिच्छामि दुक्कडं (सूत्रं)**

एए चोद्दस सुत्ता पुव्विल्लिया य एगूणवीसंति एए तेत्तीसमासायणसुत्तत्ति । एतानि चतुर्दश सूत्राणि श्रुतक्रियाकालगोचरत्वान्न पुनरुक्तभाञ्जीति, तथा दोषदुष्टपदं श्रुतं यदधीतं, तद्यथा—व्याविद्धं विपर्यस्तरत्नमालावद्, अनेन प्रकारेण याऽऽशातना तया हेतुभूतया योऽतिचारः कृतस्तस्य मिथ्यादुष्कृतमिति क्रिया, एवमन्यत्रापि योज्या, व्यत्याम्रेडितं कोलिकपायसवत्, हीनाक्षरम्—अक्षरन्यूनम्, अत्यक्षरम्—अधिकाक्षरं, पदहीनं—पदेनैवोनं, विनयहीनम्—अकृतोचितविनयं, घोषहीनम्—उदात्तादिघोषरहितं, योगरहितं—सम्यगकृतयोगोपचारं, सुष्ठुदत्तं गुरुणा दुष्ठु प्रतीच्छितं कलुषितान्तरात्मनेति, अकाले कृतः स्वाध्यायो—यो यस्य श्रुतस्य कालिकादेरकाल इति, काले न कृतः स्वाध्यायः—यो यस्याऽऽत्मीयोऽध्ययनकाल उक्त इति, अस्वाध्यायिके स्वाध्यायितं ॥ किमिदमस्वाध्यायिकमित्यनेन प्रस्तावेनाऽऽयाताऽस्वाध्यायिकनिर्युक्तिरित्यस्यामेवाऽऽद्यद्वारगाथा—

१ असपत्नो भवति कर्त्तव्य ॥ २ ॥ एतानि चतुर्दश सूत्राणि पूर्वाणि चैकोनविंशति , एतानि त्रयस्त्रिंशदाशातनासूत्राणि

**असज्झाइयनिज्जुत्ती वुच्छामी धीरपुरिसपण्णत्तं । जं नाऊण सुविहिया पवयणसारं उवलहंति ॥ १३२१ ॥**

**असज्झायं तु दुविहं आयसमुत्थं च परसमुत्थं च । जं तत्थ परसमुत्थं तं पंचविहं तु नायव्वं ॥ १३२२ ॥**

व्याख्या—आ अध्ययनमाध्ययनमाध्यायः शोभन आध्यायः स्वाध्यायः स एव स्वाध्यायिकं न स्वाध्यायिकमस्वाध्यायिकं तत्कारणमपि च रुधिरादि कारणे कार्योपचारात् अस्वाध्यायिकमुच्यते, तदस्वाध्यायिकं द्विविधं—द्विप्रकारं, मूलभेदापेक्षया द्विविधमेव, द्वैविध्यं प्रदर्शयति—'आयसमुत्थं च परसमुत्थं च' आत्मनः समुत्थं—स्वव्रणोद्भवं रुधिरादि, चशब्दः स्वगतानेकभेदप्रदर्शकः, परसमुत्थं—संयमघातकादि, चः पूर्ववत्, तत्थ जं परसमुत्थं—परोद्भवं तं पञ्चविधं तु—पञ्चप्रकारं 'मुणेयव्वं' ज्ञातव्यमिति गाथार्थः ॥ १३२१-१३२२ ॥ तत्र बहुवक्तव्यत्वात् परसमुत्थमेव पञ्चविधमादावुपदर्शयति—

**संजमघाउप्पाए सादिव्वे वुग्गहे य सारीरे । घोसणयमिच्छरण्णो कोई छलिओ पमाएणं ॥ १३२३ ॥**

व्याख्या—'संयमघातकं' सयमविनाशकमित्यर्थः, तच्च महिकादि, उत्पातेन निर्वृत्तमौत्पातिकं, तच्च पांशुपातादि, सह दिव्यैः सादिव्यं तच्च गन्धर्वनगरादि दिव्यकृतं सदिव्यं वेत्यर्थः, व्युद्ग्रहश्चेति व्युद्ग्रहः—सङ्ग्रामः, असावप्यस्वाध्यायिकनिमित्तत्वात् तथोच्यते, शारीरं तिर्यग्मनुष्यपुद्गलादि, एयंमि पंचविहे असज्झाए सज्झायं करेंतस्स आयसंजमविराहणा, तत्थ दिट्ठंतो, घोसणयमिच्छ इत्यादेर्गाथाशकलस्यार्थं कथानकादवसेय इति गाथासमुदायार्थः, अधुना गाथापश्चार्धावयवार्थप्रतिपादनायाह—

१ एतस्मिन् पञ्चविधेऽस्वाध्यायिके स्वाध्याय कुर्वत आत्मसयमविराधना,

**मिच्छभयघोसण निवे हियसेसा ते उ दंडिया रण्णा । एवं दुहओ दंडो सुरपच्छित्ते इह परे य ॥ १३२४ ॥**

व्याख्या—खिइपइट्ठियं णयरं, जियसत्तू राया, तेण सविसए घोसावियं जहा मेच्छो राया आगच्छइ, तो गामकूलणयराणि मोत्तु समासन्ने दुग्गे ठायह, मा विणस्सिहिह, जे ठिया रण्णो वयणेण दुग्गादिसु ते ण विणट्ठा, जे पुण ण ठिया ते मिच्छया(पाई)हि विलुत्ता, ते पुणो रण्णा आणाभंगो मम कओत्ति जंपि कंपि हियसेसं तंपि दंडिया, एवमसज्झाए सज्झायं करेतस्स उभओ दंडो, सुरत्ति देवया पछलइ पच्छित्तेत्ति—पायच्छित्तं च पावइ 'इह'त्ति इहलोए 'परे'त्ति परलोए णाणादि विफलत्ति गाथार्थः ॥ १३२४ ॥ ( १९५०० ) इमो दिट्ठंतोवणओ—

**राया इह तित्थयरो जाणवया साहु घोसणं सुत्तं । मेच्छो य असज्झाओ रयणधणाइं च नाणाई ॥ १३२५ ॥**

व्याख्या—जहा राया तहा तित्थयरो, जहा जाणवया तहा साहू, जहा घोसणं तहा सुत्तं—असज्झाइए सज्झायपडि-

१ तत्र दृष्टान्त । क्षितिप्रतिष्ठित नगर जितशत्रू राजा, तेन स्वविषये घोषित यथा म्लेच्छो राजा आगच्छति ततो ग्रामकूलनगरादीनि मुक्त्वा समासन्ने दुर्गे तिष्ठत, मा विनङ्क्षत, ये स्थिता राज्ञो वचनेन दुर्गादिषु ते न विनष्टा , ये पुनर्न स्थितास्ते म्लेच्छपत्तिभिर्विलुप्ता , ते पुना राज्ञा आज्ञाभङ्गो मम कृत इति यदपि किमपि हृतशेष तदपि दण्डिता , एवमस्वाध्यायिके स्वाध्याय कुर्वत उभयतो दण्ड , सुर इति देवता प्रच्छलति, प्रायश्चित्तमिति प्रायश्चित्त च प्राप्नोति, इहेति इहलोके पर इति परलोके ज्ञानादीनि विफलानीति । अथ दृष्टान्तोपनय यथा राजा तथा तीर्थकरो यथा जानपदास्तथा साधवो यथा घोषण तथा सूत्र अस्वाध्यायिके स्वाध्यायप्रति-

सेहगेति, जहा मेच्छो तहा असज्झाओ महिगादि, जहा रयणधणाइ तहा णाणादीणि महिगादीहिं अविहीकारिणो हीरंति गाथार्थः ॥ १३२५ ॥

**थोवावसेसपोरिसिमज्झयणं वावि जो कुणइ सोउ । णाणाइसाररहियस्स तस्स छलणा उ संसारे ॥ १३२६ ॥**

व्याख्या—'थोवावसेसपोरिसि' कालवेलत्ति जं भणियं होइ, एवं सोउंत्ति संबंधो, अज्झयणं–पाठो अविसद्दाओ वक्खाणं वावि जो कुणइ आणादिलंघणे णाणाइसाररहियस्स तस्स छलणा उ संसारेत्ति–णाणादिवेफलत्तणओ चेव गाथार्थः ॥ १३२६ ॥ तत्राऽऽद्यद्वारावयवार्थप्रतिपादनायाह—

**महिया य भिन्नवासे सच्चित्तरए य संजमे तिविहे । दव्वे खित्ते काले जहियं वा जच्चिरं सव्वं ॥ १३२७ ॥**

व्याख्या—'महिय'त्ति धूमिगा 'भिन्नवासे य'त्ति बुब्बुदादौ 'सचित्तरए'त्ति अरण्णे वाउद्धुयपुढविरएत्ति भणियं होइ, संजमघाइयं एवं तिविहं होइ, इमं च 'दव्वे'त्ति तं चेव दव्वं महिगादि 'खेत्ते काले जहि वे ति जहिं खेत्ते महिगादि पडइ जच्चिरं कालं 'सव्वं'ति भावओ ठाणभासादि परिहरिज्जइ इति गाथासमुदायार्थः ॥ १३२७ ॥ अवयवार्थं तु भाष्यकारः स्वयमेव व्याचष्टे, इह पञ्चविधासज्झाइयस्स, तं कहं परिहरियव्वमिति ?, तप्पसाहगो इमो दिट्ठंतो—

१ पेधकमिति, यथा म्लेच्छस्तथाऽस्वाध्यायो महिकादि, यथा रत्नधनादि तथा ज्ञानादीनि महिकादिभिरविधिकारिणो ह्रियन्ते । स्तोकावशेषा पौरुषीति कालवेलेति यद्भणितं भवति, एवं स इतिसम्बन्धः, अध्ययनं पाठं अविशब्दात् व्याख्यानं वापि यः करोति आज्ञाद्युल्लङ्घने ज्ञानादिसाररहितस्य तस्य छलना तु संसार इति ज्ञानादेर्वैफल्यादेव । महिकेति धूमिका भिन्नवर्षमिति बुद्बुदादौ सति सचित्त रज इति अरण्ये वातोद्धूत पृथ्वीरज इति भणितं भवति, संयमघातकमेवं त्रिविधं भवति, इदं च द्रव्य इति तदेव द्रव्यं महिकादि क्षेत्रे काले यत्रेति–यत्र क्षेत्रे महिकादि पतति

**दुग्गाइतोसियनिवो पंचण्हं देइ इच्छियपयारं । गहिए य देइ मुल्लं जणस्स आहारवत्थाई ॥ १३२८ ॥**

व्याख्या—एगस्स रण्णो पंच पुरिसा, ते बहुसमरलद्धविजया, अण्णया तेहिं अच्चंतविसमं दुग्गं गहियं, तेसिं तुट्ठो राया इच्छियं नगरे पयारं देइ, ज ते किंचि असणाइ वा वत्थाइगं च जणस्स गिण्हंति तस्स वेयणयं सव्वं राया पयच्छइ इति गाथार्थः ॥ १३२८ ॥

**इक्केण तोसियतरो गिहमगिहे तस्स सव्वहिं वियरे । रत्थाईसु चउण्हं एवं पढमं तु सव्वत्थ ॥ १३२९ ॥**

व्याख्या—तेसिं पंचण्हं पुरिसाणं एगेण तोसिययरो तस्स गिहावणट्ठाणेसु सव्वत्थ इच्छियपयारं पयच्छइ, जो एते दिण्णपयारे आसाएज्जा तस्स राया दंडं करेइ, एस दिट्ठंतो, इमो उवसंहारो–जहा पंच पुरिसा तहा पंचविहासज्झाइयं, जहा सो एगो अब्भहिततरो पुरिसो एवं पढमं संजमोवघाइयं सव्वं तत्थ ठाणासणादि, तम्मि वट्टमाणे ण सज्झाओ नेव पडिलेहणादिकावि चेट्ठा कीरइ, इयरेसु चउसु असज्झाइएसु जहा ते चउरो पुरिसा रत्थाइसु चेव अणासाइणिज्जा तहा तेसु सज्झाओ चेव न कीरइ, सेसा सव्वा चेट्ठा कीरइ आवस्सगादि उक्कालियं च पढिज्जइ । महियाइतिविहस्स संजमोवघाइस्स इमं वक्खाणं—

१ यावन्तं कालं ( वा पतति ) सर्वमिति भावतः स्थानभाषादि परिह्रियते । इह पञ्चविधास्वाध्यायिकस्य, तत् कथं परिहर्त्तव्यमिति ?, तत्प्रसाधकोऽयं दृष्टान्तः–एकस्य राज्ञः पञ्च पुरुषाः, ते बहुसमरलब्धविजयाः, अन्यदा तैरत्यन्तविषमो दुर्गो गृहीतः, तेभ्यस्तुष्टो राजा ईप्सितं नगरे प्रचारं ददाति, यत्ते किञ्चिदशनादि वा वस्त्रादिकं वा जनस्य गृह्णन्ति तस्य वेतनं सर्वं राजा प्रयच्छति । तेषां पञ्चानां पुरुषाणामेकेन तोषिततरः, तस्मै गृहापणस्थानेषु सर्वत्रेप्सितं प्रचारं प्रयच्छति, य एतान् दत्तप्रचारान् आशातयेत् तस्य राजा दण्डं करोति, एष दृष्टान्तोऽयमुपसंहारः–यथा पञ्च पुरुषास्तथा पञ्चविधास्वाध्यायिकं, यथा स एकोऽभ्यधिकतरः पुरुष एवं प्रथमं संयमोपघातिकं सर्वं तत्र स्थानासनादि, तस्मिन् वर्त्तमाने न स्वाध्यायो नैव

**महिया उ गब्भमासे सच्चित्तरओ अ ईसिआयंबो । वासे तिन्नि पयारा बुब्बुअ तव्वज्ज फुसिए य ॥ २१६ ॥ (भा०)**

व्याख्या—'महिय'त्ति धूमिया, सा य कत्तियमग्गसिराइसु गब्भमासेसु हवइ, सा य पडणसमकालं चेव सुहुमत्तणओ सव्वं आउकायभावियं करेति, तत्थ तक्कालसमयं चेव सव्वचेट्ठा निरुंभति, ववहारसच्चित्तो पुढविक्काओ अरण्णो वाउब्भूओ आगओ रओ भन्नइ, तस्स सच्चित्तलक्खणं वण्णओ ईसिं आयंबो दिसंतरे दीसइ, सोवि निरंतरपाएण तिण्हं-तिदिणाणं परओ सव्वं पुढवीकायभावियं करेति, तत्रोत्पातशङ्कासंभवश्च । भिन्नवासं तिविहं–बुब्बुदादि, जत्थ वासे पडमाणे उदगे बुब्बुदा भवन्ति तं बुब्बुयवरिसं, तेहि वज्जियं तव्वज्जं, सुहुमफुसारेहिं पडमाणेहि फुसियवरिसं, एतेसिं जहासंखं

१ प्रतिलेखनादिकाऽपि चेष्टा क्रियते, इतरेषु चतुर्षु अस्वाध्यायिकेषु यथा ते चत्वारः पुरुषा रथ्यादिष्वेवाशातनीयास्तथा तेषु स्वाध्याय एव न क्रियते शेषा सर्वा चेष्टा क्रियते आवश्यकादि उत्कालिकं च पठ्यते । महिकादित्रिविधस्य संयमोपघातिकस्येदं व्याख्यानं–महिकेति धूमिका, सा च कार्त्तिकमार्गशिरआदिषु गर्भमासेषु भवति, सा च पतनसमकालमेव सूक्ष्मत्वात् सर्वमप्कायभावितं करोति, तत्र तत्कालसमयमेव सर्वां चेष्टां निरुणद्धि, व्यवहारसचित्तः पृथ्वीकाय आरण्यः वायूद्धूत आगतो रजो भण्यते, तस्य सचित्तलक्षणं वर्णत ईषदाताम्रः दिगन्तरे दृश्यते, तदपि निरन्तरपातेन त्रिदिनात् परतः सर्वं पृथ्वीकायभावितं करोति । भिन्नवर्षं त्रिविधं, यत्र वर्षे पतति उदके बुद्बुदा भवन्ति स बुद्बुदवर्षः, तैर्वर्जितं तद्वर्जं, सूक्ष्मैर्बिन्दुभिः पतद्भिः बिन्दुवर्षः । एतेषां यथासंख्यं

तिण्हपंचसत्तदिणपरओ सव्वं आउक्कायभावियं भवइ ॥ १३२९ ॥ संजमघायस्स सव्वभेदाणं इमो चउव्विहो परिहारो–'दव्वे खेत्ते' पच्छद्धं, अस्य व्याख्या—

दव्वे तं चिय दव्वं खित्ते जहियं तु जच्चिरं कालं । ठाणाइ भास भावे मुत्तुं उस्सासउम्मेसे ॥ २१७ ॥ (भा०)

व्याख्या—दव्वओ तं चेव दव्वं महिया सच्चित्तरओ भिण्णवासं वा परिहरिज्जइ। खेत्ते जहिं पडइत्ति–जहिं खेत्ते तं महियाइ पडइ तहि चेव परिहरिज्जइ, 'जच्चिरं काल'न्ति पडणकालाओ आरब्भ जच्चिरं कालं भवति 'ठाणाइभास भावे'त्ति भावओ 'ठाणे'त्ति काउस्सग्गं न करेति, न य भासइ, आइसद्दाओ गमणपडिलेहणसज्झायादि न करेति, 'मोत्तुं उस्सासउम्मेसे'त्ति 'मोत्तु' ति ण पडिसिज्झंति उस्सासादिया, अशक्यत्वात् जीवितव्याघातकत्वाच्च, शेषाः क्रियाः सर्वा निषिध्यन्ते, एस उस्सग्गपरिहारो, आइण्णं पुण सच्चित्तरए तिण्णि भिण्णवासे तिण्णि पंच सत्त दिणा, अओ परं सज्झायादि

१ त्रिपञ्चसप्तदिनेभ्यः परतः सर्वं अप्कायभावितं भवति, संयमघातकानां सर्वभेदानामयं चतुर्विधः परिहारः–द्रव्यतस्तदेव द्रव्यं महिका सचित्तरजो भिन्नवर्षो वा परिह्रियते, क्षेत्रे यत्र पतति–यत्र क्षेत्रे तत् महिकादि पतति तत्रैव परिह्रियते, यावच्चिरं कालमिति पतनकालादारभ्य यावच्चिरं कालं भवति, स्थानादिभाषा भावे इति भावतः स्थानमिति कायोत्सर्गं न करोति, न च भाषते, आदिशब्दात् गमनप्रतिलेखनास्वाध्यायादि न करोति, मुक्त्वोच्छ्वासोन्मेषाविति मुक्त्वेति न प्रतिषिध्यन्ते उच्छ्वासादयः । एष उत्सर्गपरिहारः, आचरणा पुनः सचित्तरजसि त्रीणि भिन्नवर्षे त्रीणि पञ्च सप्त दिनानि, अतः परं स्वाध्यायादि
* "खेत्ते जहिं पडइ जच्चिर काल" इत्यपि पुस्तकान्तरे । + "मोत्तु उस्सासउम्मेस" इति पाठान्तरं ।

सव्वं न करेति, अण्णे भणंति–बुब्बुयवरिसे बुब्बुयवज्जिए य अहोरत्ता पंच, फुसियवरिसे सत्त, अओ परं आउक्कायभाविए सव्वा चेट्ठा निरुंभंतित्ति गाथार्थः ॥ २१७ ॥ कहं ?—

वासत्ताणावरिया निक्कारण ठंति कज्जि जयणाए। हत्थच्छंगुलिसन्ना पुत्तावरिया व भासंति ॥ १३३० ॥

व्याख्या—निक्कारणे वासाकप्पं–कंबली(ता)ए पाउया निहुया सव्वब्भंतरे चिट्ठंति, अवस्सकायव्वे वत्तव्वे वा कज्जे इमा जयणा–हत्थेण भमुहादिअच्छिवियारेण अंगुलीए वा सन्नत्ति–इमं करेहित्ति, अह एवं णावगच्छइ, मुहपोत्तीयअंतरियाए जयणाए भासंति, गिलाणादिकज्जे वासाकप्पपाउया गच्छंति त्ति ॥ १३३० ॥ संजमघाएत्ति दारं गयं । इयाणिं उप्पाएत्ति, तत्थ—

पंसू अ मंसरुहिरे केससिलावुट्ठि तह रउग्घाए । मंसरुहिरे अहोरत्त अवसेसे जच्चिरं सुत्तं ॥ १३३१ ॥

व्याख्या—धूलीवरिसं मंसवरिसं रुहिरवरिसं 'केस'त्ति केसवरिसं करगादि सिलावरिसं रयुग्घायपडणं च, एएसिं इमो

१ सर्वं न करोति, अन्ये भणन्ति–बुद्बुदवर्षे बुद्बुदवर्जिते च अहोरात्राणि पञ्च बिन्दुवर्षे सप्त, अतः परमप्कायभावितत्वात् सर्वाश्चेष्टा निरुणद्धि। कथं। निष्कारणे वर्षाकल्प–कम्बल तेन प्रावृता निभृता सर्वाभ्यन्तरे तिष्ठन्ति, अवश्यकर्त्तव्ये अवश्यवक्तव्ये वा कार्ये इयं यतना–हस्तेन भ्रकुट्याद्यक्षिविकारेणाङ्गुल्या वा संज्ञयन्ति–इदं कुरुतेति, अथैव नावगच्छति मुखवस्त्रिकयाऽन्तरितया यतनया भाषन्ते, ग्लानादिकार्ये वर्षाकल्पप्रावृता गच्छन्तीति । संयमघातक इति द्वारं गतं । इदानीमौत्पातिकमिति, तत्र धूलिवर्षो मांसवर्षो रुधिरवर्षः केशेति केशवर्षः करकादि शिलावर्षः रजउद्घातपतनं च, एतेषामयं

परिहारो–मंसरुहिरे अहोरत्तं सज्झाओ न कीरइ, अवसेसा पंसुमाइया जच्चिरं कालं पडंति तत्तियं कालं सुत्तं नंदिमाइयं न पढंतित्ति गाथार्थः ॥ १३३१ ॥ पंसुरयुग्घायाण इमं वक्खाणं—

पंसू अचित्तरओ रयस्सिलाओ दिसा रउग्घाओ । तत्थ सवाए निव्वायए य सुत्तं परिहरंति ॥ १३३२ ॥

व्याख्या—धूमागारो आपंडुरो रओ अच्चित्तो य पंसू भणइ, महास्कन्धावारगमनसमुद्भूत इव विश्रसापरिणामतः समन्ताद्रेणुपतनं रजउद्घातो भण्यते, अहवा एस रओ उग्घाडउ पुण पंसुरिया भण्णइ । एएसु वायसहिएसु निव्वाएसु वा सुत्तपोरिसिं न करेतित्ति गाथार्थः ॥ १३३२ ॥ किं चान्यत्—

साभाविय तिन्नि दिणा सुगिम्हए निक्खिवंति जइ जोगं। तो तंमि पडंतंमी करंति संवच्छरज्झायं ॥ १३३३॥

व्याख्या—एए पंसुरउग्घाया साभाविया हवेज्जा असाभाविया वा, तत्थ असब्भाविया जे णिग्घायभूमिकंपचंदोपरागादिदिव्वसहिया, एरिसेसु असाभाविएसु कएवि उस्सग्गे न करेंति सज्झायं, 'सुगिम्हए'त्ति यदि पुण चित्तसुद्धपक्खदसमीए अवरण्हे जोगं निक्खिवंति दसमीओ परेण जाव पुण्णिमा एत्थंतरे तिण्णि दिणा उवरुवरिं अचित्तरउग्घाडावणं

१ परिहारः–मांसरुधिरयोरहोरात्रं स्वाध्यायो न क्रियते, अवशेषाः पांश्वादिका यावच्चिरं कालं पतन्ति तावन्तं कालं सूत्रं–नन्द्यादिकं न पठन्तीति । पांशुरजउद्घातयोरिदं व्याख्यानं–धूमाकार आपाण्डुश्च रजः अचित्तश्च पांशुर्भण्यते अथवैष रजः उद्घातस्तु पुनः पांशुरिका भण्यते, एतेषु वातसहितेषु निवातेषु वा सूत्रपौरुषीं न करोतीति । एतौ पांशुरजउद्घातौ स्वाभाविकौ भवेतामस्वाभाविकौ वा, तत्रास्वाभाविकौ यौ निर्घातभूमिकम्पचन्द्रोपरागादिदिव्यसहितौ, ईदृशयोरस्वाभाविकयोः कृतेऽपि कायोत्सर्गे न कुर्वन्ति स्वाध्यायं, सुग्रीष्मक इति यदि पुनश्चैत्रशुद्धपक्षदशम्या अपराह्णे योगं निक्षिपन्ति दशमीतः परतः यावत् पूर्णिमा अत्रान्तरे त्रीन् दिवसान् उपर्युपरि अचित्तरजउद्घातनार्थं

काउस्सग्गं करेंति तेरसिमादीसु वा तिसु दिणेसु तो साभाविगे पडंतेऽवि संवच्छरं सज्झायं करेंति अह उस्सग्गं न करेंति तो साभाविए य पडंते सज्झायं न करेंतित्ति गाथार्थः ॥ १३३३ ॥ उप्पाइयत्ति गयं, इदाणिं सादिव्वेत्ति दारं, तत्र—

गंधव्वदिसाविज्जुक्कगज्जिए जूअजक्खआलित्ते । इक्किक्क पोरिसी गज्जियं तु दो पोरिसी हणइ ॥ १३३४ ॥

व्याख्या—गंधर्व-नगरविउव्वणं, दिसादाहकरणं विज्जुभवणं उक्कापडणं गज्जियकरणं, जूवगो वक्खमाणलक्खणो, जक्खा दित्तं-जक्खुद्दित्तं आगासे भवइ । तत्थ गंधव्वनगरं जक्खुद्दित्तं च एए नियमा दिव्वकया, सेसा भयणिज्जा, जेण फुडं न नज्जंति तेण तेसिं परिहारो, एए पुण गंधव्वाइया सव्वे एक्केक्कं पोरिसिं उवहणंति, गज्जियं तु दो पोरिसी उवहणइत्ति गाथार्थः ॥ १३३४ ॥

दिसिदाह छिन्नमूलो उक्क सरेहा पगासजुत्ता वा । संझाछेयावरणो उ जूवओ सुक्कि दिण तिन्नि ॥ १३३५ ॥

व्याख्या—अन्यतमदिगन्तरविभागे महानगरप्रदीप्तमिवोद्योतः किन्तूपरि प्रकाशोऽधस्तादन्धकारः ईदृक् छिन्नमूलो दिग्दाहः, उक्कालक्खणं-सदेहवण्णं रेहं करेंती जा पडइ सा उक्का, रेहविरहिया वा उज्जोयं करेंती पडइ सावि उक्का ।

१ कायोत्सर्गं कुर्वन्ति त्रयोदश्यादिषु वा त्रिषु दिवसेषु तत्र स्वाभाविकयोः पततोरपि संवत्सरं स्वाध्यायं कुर्वन्ति, अथोत्सर्गं न कुर्वन्ति तदा स्वाभाविके पतति स्वाध्यायं न करोति । औत्पातिकमिति गतं, इदानीं सादिव्यमिति द्वारं, तच्च—गान्धर्वं नगरविकुर्वणं दिग्दाहकरणं विद्युद्भवनं उल्कापतनं गर्जितकरणं यूपको-वक्ष्यमाणलक्षणः यक्षादीप्त-यक्षोद्दीप्तमाकाशे भवति, तत्र गान्धर्वनगरं यक्षोद्दीप्तं च एते नियमात् देवकृते, शेषाणि भजनीयानि, येन स्फुटं न ज्ञायन्ते तेन तेषां परिहारः । एते गान्धर्वादिकाः पुनः सर्वे एकैकां पौरुषीमुपघ्नन्ति, गर्जितं तु द्वे पौरुष्यावुपहन्ति । उल्कालक्षणं-सदेहवर्णां रेखां कुर्वन्ती या पतति सोल्का रेखाविरहिता वोद्योतं कुर्वन्ती पतति साप्युल्का ।

जूवगो'त्ति संझप्पहा चंदप्पहा य जेणं जुगवं भवंति तेण जूवगो, सा य संझप्पहा चंदप्पभावरिया णिप्फिडंती न नज्जइ सुक्कपक्खपडिवगादिसु दिणेसु, संझाछेयए अणज्जमाणे कालवेलं न मुणंति तओ तिन्नि दिणे पाउसियं कालं न गेण्हंति—तिसु दिणेसु पाउसियसुत्तपोरिसिं न करेंति त्ति गाथार्थः ॥ १३३५ ॥

केसिंचि हुंतिऽमोहा उ जूवओ ता य हुंति आइन्ना । जेसिं तु अणाइन्ना तेसिं किर पोरिसी तिन्नि ॥ १३३६ ॥

व्याख्या—जगस्स सुभासुभकम्मनिमित्तुप्पाओ अमोहो—आइच्चकिरणविकारजणिओ, आइच्चमुदयत्थमआयंतो(त्तो) किण्हसामो वा सगडुद्धिसंठिओ दंडो अमोहत्ति स एव जुवगो, सेसं कंठं ॥ १३३६ ॥ किं चान्यत्—

चंदिमसूरुवरागे निग्घाए गुंजिए अहोरत्तं । संझा चउ पाडिएया जं जहिं सुगिम्हए नियमा ॥ १३३७ ॥

व्याख्या—चंदसूरुवरागो गहणं भन्नइ—एयं वक्खमाणं, साभ्रे निरभ्रे वा गगने व्यन्तरकृतो महागर्जितसमो ध्वनिर्निर्घातः, तस्यैव वा विकारो गुञ्जावद्गुञ्जितो महाध्वनिर्गुञ्जितं । सामण्णओ एएसु चउसुवि अहोरत्तं सज्झाओ न कीरइ, निग्घायगुंजिएसु विसेसो—बितियदिणे जाव सा वेला णो अहोरत्तछेएण छिज्जइ जहा अन्नेसु असज्झाएसु, 'संझा चउ'त्ति

१ यूपक इति सन्ध्याप्रभा चन्द्रप्रभा च येन युगपद् भवतस्तेन यूपकः, सा च सन्ध्याप्रभा चन्द्रप्रभावृता गच्छन्ती न ज्ञायते शुक्लपक्षप्रतिपदादिषु, दिनेषु, सन्ध्याच्छेदेऽज्ञायमाने कालवेलां न जानन्ति ततस्त्रीन् दिवसान् प्रादोषिकं कालं न गृह्णन्ति त्रिषु दिवसेषु प्रादोषिकसूत्रपौरुषीं न कुर्वन्तीति । जगतः शुभाशुभकर्मनिमित्त उत्पातोऽमोघ—आदित्यकिरणविकारजनित आदित्योद्गमनास्तमयने आताम्रः कृष्णश्यामो वा शकटोर्द्धिसंस्थितो दण्डोऽमोघ इति स एव यूपक इति, शेषं कण्ठ्यं । चन्द्रसूर्योपरागो ग्रहणं भण्यते, एतत् वक्ष्यमाणं, सामान्यत एतेषु चतुर्ष्वपि अहोरात्रं स्वाध्यायो न क्रियते, निर्घातगुञ्जितयोर्विशेषः—द्वितीयदिने यावत् सा वेला नाहोरात्रच्छेदेन छिद्यते यथाऽन्येष्वस्वाध्यायिकेषु, 'सन्ध्याचतुष्क'मिति

अणुदिए सूरिए मज्झण्हे अत्थमणे अद्धरत्ते य, एयासु चउसु सज्झायं न करेंति पुव्वुत्तं, 'पाडिवए'त्ति चउण्हं महामहाणं चउसु पाडिवएसु सज्झायं न करेंतित्ति, एवं अन्नंपि जंति—महं जाणेज्जा जहिंति—गामनगरादिसु तंपि तत्थ वज्जेज्जा, सुगिम्हए पुण सव्वत्थ नियमा असज्झाओ भवति, एत्थ अणागाढजोगा निक्खिवंति नियमा आगाढा न निक्खिवंति, न पढंतित्ति गाथार्थः ॥ १३३७ ॥ के य ते पुण महामहाः ?, उच्यन्ते—

आसाढी इंदमहो कत्तिय सुगिम्हए य बोद्धव्वे । एए महामहा खलु एएसिं चेव पाडिवया ॥ १३३८ ॥

व्याख्या—आसाढी—आसाढपुन्निमा, इह लाडाण सावणपुन्निमाए भवति, इंदमहो आसोयपुन्निमाए भवति, 'कत्तिय'त्ति कत्तियपुन्निमाए चेव सुगिम्हओ—चेत्तपुण्णिमा, एए अंतिमदिवसा गहिया, आई उ पुण जत्थ जत्थ विसए जओ दिवसाओ महमहा पवत्तंति तओ दिवसाओ आरब्भ जाव अंतदिवसो ताव सज्झाओ न कायव्वो, एएसिं चेव पुण्णिमाणंतरं जे बहुलपडिवया चउरो तेवि वज्जियत्ति गाथार्थः ॥ १३३८ ॥ पडिसिद्धकाले करेंतस्स इमे दोसा—

१ अनुदिते सूर्ये मध्याह्ने अस्तमयने अर्धरात्रे च, एतासु चतसृषु स्वाध्यायं न कुर्वन्ति पूर्वोक्तं, 'प्रतिपद' इति चतुर्णां महामहानां चतसृषु प्रतिपत्सु स्वाध्यायं न कुर्वन्तीति, एवमन्यमपि यमिति महं जानीयात् यत्रेति ग्रामनगरादिषु तमपि तत्र वर्जयेत्, सुग्रीष्मके पुनः सर्वत्र नियमादस्वाध्यायो भवति, अत्रानागाढयोगा निक्षिप्यन्ते नियमात् आगाढान् न निक्षिपन्ति, न पठन्तीति । के च पुनस्ते महामहाः ?, उच्यन्ते—आषाढी आषाढपूर्णिमा इह लाटानां श्रावणपूर्णिमायां भवति, इन्द्रमहः अश्वयुक्पूर्णिमायां भवति, कार्तिक इति कार्तिकपूर्णिमायामेव सुग्रीष्मकः—चैत्रपूर्णिमा, एतेऽन्त्यदिवसा गृहीताः आदिस्तु पुनर्यत्र यत्र देशे यतो दिवसात् महामहाः प्रवर्त्तन्ते ततो दिवसादारभ्य यावदन्त्यो दिवसस्तावत् स्वाध्यायो न कर्तव्यः, एतासामेव पूर्णिमानामनन्तरा याः कृष्णप्रतिपदश्चतस्रस्ता अपि वर्जिता इति । प्रतिषिद्धकाले कुर्वत इमे दोषाः —

**कामं सुओवओगो तवोवहाणं अणुत्तरं भणियं । पडिसेहियंमि काले तहावि खलु कम्मबंधाय ॥ १३३९ ॥**
**छलया व सेसगणं पाडिवएसुं छणाणुमज्जंति । महवाउलत्तणेणं असारिआणं च संमाणो ॥ १३४० ॥**
**अन्नयरपमायजुत्तं छलिज्ज अप्पिड्ढिओ न उण जुत्तं । अद्धोदहिट्ठिइ पुण छलिज्ज जयणोवउत्तंपि ॥ १३४१ ॥**

व्याख्या—सरागसंजओ सरागसंजयत्तणओ इंदियविसयाअन्नयरपमायजुत्तो हविज्ज स विसेसओ महामहेसु तं पमायजुत्तं पडणीया देवया छलेज्ज । अप्पिड्ढिया खेत्तादि छउणं करेज्ज, जयणाजुत्तं पुण साहुं जो अप्पिड्ढिओ देवो अद्धोदहीओ ऊणठिईओ न चए छलेउं, अद्धसागरोवमठितीओ पुण जयणाजुत्तंपि छलेज्जा । अत्थि से सामत्थं जं तंपि पुव्वावरसंबंधसरणओ कोइ छलेज्जत्ति गाथार्थः ॥ १३३९–१३४०–१३४१ ॥ 'चंदिमसूरुवरागत्ति' अस्या व्याख्या—

**उक्कोसेण दुवालस चंदु जहन्नेण पोरिसी अट्ठ । सूरो जहन्न बारस पोरिसि उक्कोस दो अट्ठ ॥ १३४२ ॥**

व्याख्या—चंदो उदयकाले गहिओ संदूसियराईए चउरो अण्णं च अहोरत्तं एवं दुवालस, अहवा उप्पायगहणे सव्वराइयं गहणं, सग्गहो चेव निबुड्डो संदूसियराईए चउरो अण्णं च अहोरत्तं एवं बारस । अहवा अजाणओ,

१ सरागसंयत सरागसंयतत्वादिन्द्रियविषयाद्यन्यतरप्रमादयुक्तो भवेत् स विशेषतो महामहेषु त प्रमादयुक्त प्रत्यनीका देवता छलेत–अल्पर्द्धिका क्षिप्तादिच्छलना कुर्यात्, यतनायुक्त पुन साधु योऽल्पर्द्धिको देवोऽर्धोदधित ऊनस्थितिको न शक्नोति छलयितु, अर्धसागरोपमस्थितिक पुनर्यतनायुक्तमपि छलेत्, अस्ति तस्य सामर्थ्य यत्तमपि पूर्वापरसम्बन्धस्मरणत कश्चित छलेदिति। चन्द्र उदयकाले गृहीत सदूषितरात्रेश्चत्वार अन्यचाहोरात्रमेव द्वादश, अथवा उत्पातग्रहणे सर्वरात्रिक ग्रहण, सग्रह एव मुडित सदूषितरात्रेश्चत्वार अन्यच्चाहोरात्रमेव द्वादश, अथवा अजानत –

अब्भछण्णे संकाए न नज्जइ, केवलं ग्रहणं, परिहरिया राई पहाए दिट्ठं सग्गहो निबुडो अण्णं च अहोरत्तं एवं दुवालस । एवं चंदस्स, सूरस्स अत्थमणगहणे सग्गहनिव्वुडो, उवहयराईए चउरो अण्णं च अहोरत्तं एवं बारस । अह उदयंतो गहिओ तो संदूसिए अहोरत्ते अट्ठ अण्णं च अहोरत्तं परिहरइ एवं सोलस, अहवा उदयवेलाए गहिओ उप्पाइयगहणेण सव्वं दिणं गहणं होउं सग्गहो चेव निव्वुडो, संदूसियस्स अहोरत्तस्स अट्ठ अण्णं च अहोरत्तं एवं सोलस । अहवा अब्भच्छन्ने न नज्जइ, केवलं होहिति गहणं, दिवसओ संकाए न पढियं, अत्थमणवेलाए दिट्ठं गहणं सग्गहो निव्वुडो, संदूसियस्स अट्ठ अण्णं च अहोरत्तं एवं सोलसत्ति गाथार्थः ॥ १३४२ ॥

**सग्गहनिव्वुड एवं सूराई जेण हुंतिऽहोरत्ता । आइन्नं दिणमुक्के सुच्चिय दिवसो अ राई य ॥ १३४३ ॥**

व्याख्या—सग्गहनिबुडे एगं अहोरत्तं उवहयं, कहं ?, उच्यते, सूरादी जेण होंतिऽहोरत्तं, सूरउदयकालाओ जेण अहोरत्तस्स आदी भवति तं परिहरित्तुं संदूसिअं अण्णंपि अहोरत्तं परिहरियव्वं । इमं पुण आइन्नं–चंदो रातीए गहिओ राई

१ अभ्रच्छन्ने शङ्कया न ज्ञायते, केवल ग्रहण, परिहृता रात्रि, प्रभाते दृष्ट, सग्रहो मुडित, अन्यचाहोरात्रमेव द्वादश, एव चन्द्रस्य, सूर्यस्य तु अस्तमयनग्रहणे सग्रहो मूडित, उपहतरात्र्याश्चत्वारोऽन्यच्चाहोरात्रमेव द्वादश, अथोद्गच्छन् गृहीत तत सदूषिताहोरात्रस्याष्टौ अन्यचाहोरात्र परिह्रियते एव षोडश, अथवोदयवेलाया गृहीत औत्पातिकग्रहणेन, सर्वं दिन ग्रहण भूत्वा सग्रह एव मूडित, सदूषितस्याहोरात्रस्याष्टौ अन्यचाहोरात्रमेव षोडश, अथवाऽभ्रच्छन्ने न ज्ञायते केवल भविष्यति ग्रहण, दिवसे शङ्कया न पठित, अस्तमयनवेलाया दृष्ट ग्रहण सग्रहो मूडित, सदूषितस्याष्ट अन्यचाहोरात्रमेव षोडशेति । सग्रहे मूडिते एकमहोरात्रमुपहत, कथ ? उच्यते, सूर्यादीनि येन भवन्त्यहोरात्राणि–सूर्योदयकालात् येनाहोरात्रस्यादिर्भवति, तत् परिहृत्य सदूषितमन्यदप्यहोरात्र परिहर्त्तव्य, इद पुनराचीर्णं–चन्द्रो यत्रो गृहीतो रात्रा–

चेवं मुक्को तीसे राईइ सेसं वज्जणीयं, जम्हा आगामिसूरुदए अहोरत्तसमत्ती, सूरस्सवि दियागहिओ दिया चेव मुक्को तस्सेव दिवसस्स मुक्कसेसं राई य वज्जणिज्जा । अहवा सग्गहनिव्वुडे एवं विही भणिओ, तओ सीसो पुच्छइ–कहं चंदे दुवालस सूरे सोलस जामा ?, आचार्य आह–सूरादी जेण होंतिऽहोरत्ता, चंदस्स नियमा अहोरत्तद्धे गए गहणसंभवो, अण्णं च अहोरत्तं, एव दुवालस, सूरस्स पुण अहोरत्तादीए संदूसिएयरं अहोरत्तं परिहरिज्जइ एए सोलसत्ति गाथार्थ. ॥१३४३॥ सादेवत्ति गयं, इयाणिं वुग्गहेत्ति दारं, तत्थ—

**वोग्गह दंडियमादी संखोभे दंडिए य कालगए । अणरायए य सभए जच्चिर निद्दोच्चऽहोरत्तं ॥ १३४४ ॥**

अस्या एव व्याख्यानान्तरगाथा—

**सेणाहिवई भोइय मयहरपुंसित्थिमल्लजुद्धे य । लोट्टाइभंडणे वा गुज्झग उड्डाहमचियत्तं ॥ १३४५ ॥**

इमाण दोण्हवि वक्खाणं—दंडियस्स वुग्गहो, आदिसद्दाओ सेणाहिवस्स, दोण्हं भोइयाणं दोण्हं मयहराणं दोण्हं

१ चेव मुक्तस्तस्या रात्रे शेष वर्जनीय, यस्मादागामिनि सूर्योदयेऽहोरात्रसमाप्ति, सूर्यस्यापि दिवा गृहीतो दिवैव मुक्तस्तस्यैव दिवसस्य मुक्तशेषं रात्रिश्च वर्जनीया । अथवा सग्रहे मूडिते एव विधिर्भणित, तत शिष्य पृच्छति–कथ चन्द्रे द्वादश सूर्ये षोडश यामा ?, सूर्यादीनि येनाहोरात्राणि भवन्ति, चन्द्रस्य नियमादहोरात्रेऽर्धे गते ग्रहणसभव अन्यच्चाहोरात्रमेव द्वादश, सूर्यस्य पुनरहोरात्रादित्वात् सदूषितेतरे अहोरात्रे परिह्रियेते, एते षोडश । सादिव्यमिति गत, इदानीं व्युद्ग्रह इति द्वार, तत्र–अनयोर्द्वयोरपि व्याख्यान–दण्डिकस्य व्युद्ग्रह, आदिशब्दात् सेनाधिपते', द्वयोर्भोजिकयोर्द्वयोर्महत्तरयोर्द्वयो

पुरिसाणं दोण्हं इत्थियाणं दोण्हं मल्लाणं वा जुद्धं, पिट्ठायगलोट्टभंडणे वा, आदिसद्दाओ विसयप्पसिद्धासु भंसलासु । विग्रहाः प्रायो व्यन्तरबहुलाः । तत्थ पमत्तं देवया छलेज्जा, उड्डाहो निदुक्खत्ति, जणो भणेज्जा—अम्हं आवइपत्ताणं इमे सज्झायं करेंति, अचियत्तं हवेज्जा, विसहसंखोहो परचक्कागमे, दंडिओ कालगओ भवति, 'अणरायए'त्ति रण्णा कालगए निब्भएवि जाव अन्नो राया न ठविज्जइ, 'सभए'त्ति जीवंतस्सवि रण्णो बोहिगेहिं समंतओ अभिदुयं, जच्चिरं भयं तच्चियं कालं सज्झायं न करेंति, जद्दिवसं सुयं निद्दोच्चं तस्स परओ अहोरत्तं परिहरइ । एस दंडिए कालगए विहित्ति गाथार्थः ॥१३४५॥ सेसेसु इमो विही—

तद्दिवसभोइआई अंतो सत्तण्ह जाव सज्झाओ । अणहस्स य हत्थसयं दिट्ठि विवित्तंमि सुद्धं तु ॥ १३४६ ॥

अस्या एव व्याख्यानगाथा—

मयहरपगए बहुपक्खिए य सत्तघर अंतरमए वा । निदुक्खत्ति य गरिहा न पढंति सणीयगं वावि ॥ १३४७॥

इमीण दोण्हवि वक्खाणं—गामभोइए कालगए तद्दिवसंति—अहोरत्तं परिहरंति, आदिसद्दाओ गामरट्ठमयहरो अहिगार-निउत्तो बहुसम्मओ य पगओ बहुपक्खिउत्ति—बहुसयणो, वाडगरहिए अहिवे सेज्जायरे अण्णंमि वा अण्णयरघराओ आरब्भ जाव सत्तघरंतरं एएसु मएसु अहोरत्तं सज्झाओ न कीरइ, अह करेंति निदुक्खत्तिकाउं जणो गरहति अक्कोसेज्ज वा निच्छुब्भेज्ज वा, अप्पसद्देण वा सणियं करेंति अणुपेहंति वा, जो पुण अणाहो मरति तं जइ उब्भिण्णं हत्थसयं वज्जेयव्वं, अणुब्भिन्नं असज्झायं न हवइ तहवि कुच्छियंतिकाउं आयरणाओऽवट्ठियं हत्थसयं वज्जिज्जइ । विवित्तंमि—परिट्ठवियंमि 'सुद्धं तु' तं ठाणं सुद्धं भवइ, तत्थ सज्झाओ कीरइ, जइ य तस्स न कोइ परिठवेंतओ ताहे ॥ १३४७ ॥

सागारियाइ कहणं अणिच्छ रत्तिं वसहा विगिंचंति ।
विक्खिन्ने व समंता जं दिट्ठ सढेयरे सुद्धा ॥ १३४८ ॥

व्याख्या—जदि नत्थि परिट्ठवेंतओ ताहे सागारियस्स आइमद्दाओ पुराणसड्ढस्स अहाभद्दगस्स इमं छड्डेह अम्ह सज्झाओ न सुज्झइ, जदि तेहिं छड्डिओ सुद्धो, अह न छड्डेंति ताहे अण्णं वसहिं मग्गंति, अह अण्णा वसही न लब्भइ ताहे वसहा अप्पसागारिए विगिंचंति । एस अभिण्णे विही, अह भिन्नं ढंकमादिएहिं समंता विक्किण्णं दिट्ठंमि विवित्तंमि सुद्धा, अदिट्ठे ताव गवेसेंतेहिं जं दिट्ठं तं सव्वं विवित्तंति छड्डियं, इयरंमि अदिट्ठंमि तत्थत्थेवि सुद्धा—सज्झायं करेंताणवि न पच्छित्तं, एत्थ एयं पसंगओ भणियंति गाथार्थः ॥ १३४८ ॥ वुग्गहेत्ति गयं, इयाणिं सारीरेत्ति दारं, तत्थ—

सारीरंपिय दुविहं माणुस तेरिच्छियं समासेणं । तेरिच्छं तत्थ तिहा जलथलखहजं चउद्धा उ ॥ १३४९ ॥

व्याख्या—सारीरमवि असज्झाइयं दुविहं—माणुससरीररुहिरादि तेरिच्छं असज्झाइयं च । एत्थ माणुसं ताव चिट्ठउ, तेरिच्छं ताव भणामि, तं तिविहं—मच्छादियाण जलजं गवाइयाण थलजं मयूराइयाण खहयरं । एएसिं एक्केक्कं दव्वाइयं चउविहं, एक्केक्कस्स वा दव्वादिओ इमो चउद्धा परिहारोत्ति गाथार्थः ॥ १३४९ ॥

पंचिंदियाण दव्वे खेत्ते सट्ठिहत्थ पुग्गलाइन्नं । तिकुरत्थ महंतेगा नगरे बाहिं तु गामस्स ॥ १३५० ॥

---

१ पुरुषयोर्द्वयो स्त्रियोर्द्वयोर्मल्लयोर्वा युद्ध, पृष्ठायतलोष्टभण्डने वा, आदिशब्दाद्विषयप्रसिद्धासु भसलासु (कलहविशेषेषु) । तत्र प्रमत्त देवता छलयेत् । उड्डाहो निर्दु खा इति, जनो भणेत्—असाधु आपत्प्राप्तेषु इमे स्वाध्याय कुर्वन्ति, अप्रीतिक भवेत्, वृषभसक्षोभ परचक्रागमे, दण्डिक कालगतो भवति, राज्ञि कालगते निर्भयेऽपि यावत् अन्यो राजा न स्थाप्यते, सभय इति जीवतोऽपि राज्ञो बोधिकै समन्ततोऽभिद्रुत, यावच्चिरं भय तावन्त काल स्वाध्यायं न कुर्वन्ति, यद्दिवसे श्रुत निर्दोत्य तस्मात्परतोऽहोरात्र परिह्रियते । एष दण्डिके कालगते विधि । शेषेष्वय विधि । अनयोर्द्वयोर्व्याख्यान—ग्रामभोजिके कालगते तद्दिवसमिति अहोरात्र परिहरन्ति आदिशब्दात् ग्रामराष्ट्रमहत्तरोऽधिकार—

१ नियुक्तो बहुसमतश्च प्रकृत, बहुपाक्षिक इति बहुस्वजनो, वाटकरहितेऽधिपे वा शय्यातरे अन्यस्मिन् वा अन्यतरगृहादारभ्य यावत् सप्तगृहान्तरं एतेषु मृतेषु अहोरात्र स्वाध्यायो न क्रियते, अथ कुर्वन्ति निर्दु खा इतिकृत्वा जनो गर्हते आक्रोशेद्वा निष्काशेद्वा, अल्पशब्देन वा शनै कुर्वन्ति अनुप्रेक्षन्ते वा, य पुनरनाथो म्रियते तस्य यदि पुनरुद्भिन्न हस्तशतं वर्जयितव्य, अनुद्भिन्न अस्वाध्यायिक न भवति तथापि कुत्सितमितिकृत्वा आचरणातोऽवस्थित हस्तशतात् वर्जयितव्य, विविक्ते—परिष्ठापिते शुद्धमिति तत् स्थान शुद्ध भवति—तत्र स्वाध्याय क्रियते, यदि च तस्य न कोऽपि परिष्ठापकस्तदा—यदि नास्ति परिष्ठापकस्तदा सागारिकस्य आदिशब्दात् पुराणश्राद्धस्य यथाभद्रकस्येम त्यज अस्माक

१ स्वाध्यायो न शुध्यति, यदि तैस्त्यक्त शुद्ध, अथ न त्यजन्ति तदाऽन्यां वसतिं मार्गयन्ति, अथान्या वसतिर्न लभ्यते तदा वृषभा अल्पसागारिके त्यजन्ति, एषोऽभिन्ने विधि, अथ भिन्न ढङ्कादिभि समन्तात् विकीर्णं दृष्टे विविक्ते शुद्धा अदृष्टे तावत् गवेषयद्भिर्यद्दृष्ट तत् सर्वं परिष्ठापित, इतरस्मिन्—अदृष्टे तत्रस्थेऽपि शुद्धा—स्वाध्याय कुर्वतामपि न प्रायश्चित्त, अत्रैतत् प्रसङ्गतो भणित । व्युद्ग्रह इति गत, इदानीं शारीरमिति द्वार तत्र—शारीरमपि अस्वाध्यायिक द्विविध—मानुष्यशरीररुधिरादि तैरश्चमस्वाध्याय च, अत्र मानुष्य तावत्तिष्ठतु तैरश्च तावद्भणामि—तत्त्रिविध—मत्स्यादीना जलज गवादीना स्थलज मयूरादीनां खचरज, एतेषामेकैक द्रव्यादिक चतुर्विध, एकैकस्य वा द्रव्यादिकोऽय चतुर्धा परिहार इति ।

व्याख्या—'पंचिंदियाण रुहिराइदवं असज्झाइयं, खेत्तओ सट्ठिहत्थब्भंतरे असज्झाइयं, परओ न भवइ, अहवा खेत्तओ पोग्गलादिण्णं-पोग्गलं मंसं तेण सबं आकिण्णं-व्यासं, तस्सिमो परिहारो-तिहिं कुरत्थाहिं अंतरियं सुज्झइ, आरओ न सुज्झइ, अणंतरं दूरट्ठियं न सुज्झइ । महंतरत्था-रायमग्गो जेण राया बलसमग्गो गच्छइ देवजाणरहो वा विविहा य आसवाहणा गच्छंति, सेसा कुरत्था, एसा नगरे विही, गामस्स नियमा बाहिं, एत्थ गामो अविसुद्धणेगमनयदरिसणेण सीमापज्जंतो, परगामे सीमाए सुज्झइत्ति गाथार्थः ॥ १३५० ॥

**काले तिपोरसिऽट्ठ व भावे सुत्तं तु नंदिमाईयं । सोणिय मंसं चम्मं अट्ठी विय हुंति चत्तारि ॥ १३५१ ॥**

व्याख्या—तिरियमसज्झायं संभवकालाओ जाव तइया पोरुसी ताव असज्झाइयं परओ सुज्झइ, अहवा अट्ठ जामा असज्झाइयंति-ते जत्थाघायणट्ठाणं तत्थ भवंति । भावओ पुण परिहरंति सुत्तं, तं च नंदिमणुओगदारं तंदुल-

---

१ पञ्चेन्द्रियाणां रुधिरादिद्रव्य अस्वाध्यायिक, क्षेत्रत पष्टिहस्ताभ्यन्तरेऽस्वाध्यायिक, परतो न भवति, अथवा क्षेत्रतः पुद्गलाकीर्णं-पुद्गल-मांस तेन सर्वमाकीर्णं, तस्याय परिहार -तिसृभि कुरथ्याभिरन्तरित शुध्यति, आरात् न शुध्यति, अनन्तर दूरस्थितेऽपि न शुध्यति, महद्रथ्या-राजमार्ग येन राजा बलसमग्रो गच्छति देवयानरथो वा त्रिविधान्यश्ववाहनानि गच्छन्ति, शेषा कुरथ्या , एष नगरे विधि , ग्रामात् नियमतो बहि , अत्र ग्रामोऽविशुद्धनैगमनयदर्शनेन सीमापर्यन्त , परग्रामे सीमनि शुध्यति । तैरश्चमस्वाध्यायिक सभवकालात् यावत्तृतीया पौरषी तावदस्वाध्यायिक परत शुध्यति, अथवा अष्ट यामान् अस्वाध्यायिकमिति-ते यत्राघातस्थान तत्र भवन्ति, भावत पुन परिहरन्ति सूत्र, तच्च नन्दी अनुयोगद्वाराणि तन्दुल-

वेयालियं चंदगविज्झयं पोरुसिमंडलमादी, अहवा असज्झायं चउविहं इमं-मंसं सोणियं चम्मं अट्ठि यत्ति गाथार्थः ॥ १३५१ ॥ मंसासिणा उक्खित्ते मंसे इमा विही—

**अंतो बहिं च धोअं सट्ठीहत्थाउ पोरिसी तिन्नि । महकाएँ अहोरत्तं रद्धे वुड्ढे अ सुद्धं तु ॥ १३५२ ॥**

व्याख्यानगाथा—

**बहिधोयरद्धपक्के अंतो धोए उ अवयवा हुंति । महकाय विरालाई अविभिन्ने केइ इच्छंति ॥ १३५३ ॥**

इमीणं वक्खाणं—साहु वसहीओ सट्ठीहत्थाणं अंतो बहिं च धोअन्ति भंगदर्शनमेतत्, अंतोधोयं अंतो पक्कं, अंतोधोयं बहिपक्कं बाहिं धोयं अंतो पक्कं, अंतग्गहणाउ पढमबितिया भंगा बहीग्गहणाउ ततिओ भंगो, एएसु तिसुवि असज्झाइयं, जंमि पएसे धोयं आणेत्तु वा रद्धं सो पएसो सट्ठिहत्थेहिं परिहरियव्वो, कालओ तिन्नि पोरुसिओ । तथा द्वितीयगाथायां पूर्वार्द्धेन यदुक्तं 'बहिधोयरद्धपक्के' एस चउत्थभंगो, एरिसं जइ सट्ठीए हत्थाणं अब्भंतरे आणीयं तहावि तं असज्झाइयं न भवइ, पढमबितियभंगेसु

---

१ वैचारिक चन्द्रावेध्यक पौरषीमण्डलादि, अथवा अस्वाध्यायिक चतुर्विधमिद-मास शोणित चर्म अस्थि चेति । मांसाशिनोत्क्षिप्ते मांसेऽय विधि , अनयोर्व्याख्यान-साधु वसते पष्टिहस्तानामन्तर्बहिश्च धौतमिति, अन्तर्धौत अन्त पक्व अन्तर्धौत बहि पक्व बहिर्धौतमन्त पक्व, अन्तर्ग्रहणात् प्रथमद्वितीयो भङ्गौ गृहीतौ बहिर्ग्रहणात्तु तृतीयो भङ्ग । एतेषु त्रिष्वप्यस्वाध्यायिक, यस्मिन् प्रदेशे धौत आनीय वा राद्ध स प्रदेश पष्टिहस्ताभ्यन्तरे परिहर्तव्य , कालतस्तिस्र पौरुषी , बहिर्धौतपक्व, एष चतुर्थो भङ्ग , ईदृश यदि पष्टेर्हस्तेभ्योऽन्तरमानीत तथाऽपि तदस्वाध्यायिक न भवति, प्रथमद्वितीयभङ्ग-

अंतो धोवित्तु तीए रद्धे वा तंमि ठाणे अवयवा पडंति तेण असज्झाइयं, तइयभंगे बहिं धोवित्तु अंतो पणीए मंसमेव असज्झाइयंति, त च उक्खित्तमंसं आइण्णपोग्गलं न भवइ, जं कालसाणादीहिं अणिवारियविप्पइन्नं निज्जइ तं आइन्नपोग्गलं भाणियव्वं । 'महाकाए'त्ति, अस्या व्याख्या—जो पंचिंदिओ जत्थ हओ तं आघायठाणं वज्जेयव्वं, खेत्तओ सट्ठिहत्था, कालओ अहोरत्तं, एत्थ अहोरत्तछेओ सूरुदएण, रद्धं पक्कं वा मंसं असज्झाइयं न हवइ, जत्थ य धोयं तेण पएसेण महंतो उदगवाहो वूढो तं तिपोरिसिकाले अपुन्नेवि सुद्धं, आघायणं न सुज्झइ, 'महाकाए'त्ति अस्य व्याख्या—महाकाएत्ति पच्छद्धं, मूसगादि महाकाओ सोऽवि विरालाइणा आहओ, जदि तं अभिन्नं चेव गलिउं घेत्तुं वा सट्ठीए हत्थाणं बाहिं गच्छइ तं केइ आयरिया असज्झाइयं नेच्छंति । गाथायां तु यदुक्तं केइ इच्छंति, तत्र स्वाध्यायोऽभिसंबध्यते, थेरपक्खो पुण असज्झाइयं चेवत्ति गाथार्थः ॥ १३५३ ॥ अस्यैवार्थस्य प्रकटनार्थमाह भाष्यकारः—

---

१ योरन्त प्रक्षाल्य तत्र राद्धे वा तस्मिन् स्थानेऽवयवा पतन्ति तेनास्वाध्यायिक, तृतीयभङ्गे बहि प्रक्षाल्यान्तरानीते मांसमेवास्वाध्यायिकमिति, तच्चोत्क्षिप्तमास आकीर्णपुद्गल न भवति, यत् कालश्वादिभिरनिवारित विप्रकीर्ण नीयते तत् आकीर्णपुद्गल भणितव्य । महाकाय इति, य पञ्चेन्द्रियो यत्र हतस्तत् आघातस्थान वर्जयितव्य, क्षेत्रत पष्टेर्हस्तेभ्य कालतोऽहोरात्र, अत्राहोरात्रच्छेदः सूर्योद्गमेन, राद्ध पक्व वा मास अस्वाध्यायिक न भवति, यत्र च धौत तेन प्रदेशेन महान् उदकप्रवाहो व्यूढस्तर्हि त्रिपौरुषीकालेऽपूर्णेऽपि शुद्ध, आघातन न शुध्यति, महाकाय इत्यस्य व्याख्या-महाकाय इति पश्चार्धं, मूषकादिर्महाकाय सोऽपि मार्जारादिनाऽऽहत यदि तमभिन्नमेव गृहीत्वा गिलित्वा वा पष्टेर्हस्तेभ्यो बहिर्गच्छति तत् केचिदाचार्या अस्वाध्यायिक नेच्छन्ति । केचिदिच्छन्ति स्थविरपक्ष पुनरस्वाध्यायिकमेवेति ।

सूसाइ महाकायं मज्जाराईहयाघयण केई। अविभिन्ने गिण्हेउं पढंति एगे जइऽपलोओ ॥ २१८ ॥ (भा०) ॥

गतार्थैवेयं ॥ [1]तिरियमसज्झाइयाहियागार एव इमं भन्नइ—

अंतो बहिं च भिन्नं अंडग बिंदू तहा विआया य। रायपह बूढ सुद्धे परवयणे साणमादीणं ॥ १३५४ ॥ दारं ॥

व्याख्या त्वस्या भाष्यकार एव प्रतिपदं करिष्यति। लाघवार्थं त्विह न व्याख्यायते 'अंतो बहिं च भिन्नं अंडग बिंदु'त्ति अस्य गाथाशकलस्य व्याख्या—

अंडगमुज्झियकप्पे न य भूमि खणंति इहरहा तिन्नि। असज्झाइयपमाणं मच्छियपाओ जहिं न वुड्डे ॥२१९॥ (भा०)

साहुवसहीए सट्ठीए हत्थाणंतो भिन्ने अंडए असज्झाइयं वहिभिन्ने न भवइ। अहवा साहुस्स वसहिए अंतो वहिं च अंडयं भिन्नंति वा उज्झियंति वा एगट्ठं, तं च कप्पे वा उज्झियं भूमीए वा, जइ कप्पे तो कप्पं सट्ठीए हत्थाणं वाहिं नीणेऊण धोवंति तओ सुद्धं, अह भूमीए भिन्नं तो भूमी खणेउं ण छड्डिज्जइ, न शुध्यतीत्यर्थः। 'इयरह'त्ति तत्थत्थे सट्ठिहत्था तिन्नि य पोरुसीओ परिहरिज्जइ, 'असज्झाइयस्स पमाणं'ति, किं विंदुपरिमाणमेत्तेण हीणेण अहिययरेण वा असज्झाओ भवइ ?, पुच्छा, उच्यते, मच्छियाए पाओ जहिं न्निवुड्डइ तं असज्झाइयपमाणं। 'इयाणि वियायत्ति' तत्थ—

[1] तेरश्चास्वाध्यायिकाधिकार एवेद भण्यते। साधुवसते षष्टेर्हस्तेभ्योऽन्तर् भिन्नेऽण्डेऽस्वाध्यायिक वहिर्भिन्ने न भवति, अथवा साधोर्वसतेरन्तर्बहिर्वाऽण्ड भिन्नमिति वोज्झित चैकार्थौ, तच्च कल्पे वोज्झित भूमौ वा, यदि कल्पे तर्हि कल्प षष्टेर्हस्तेभ्यो बहि नीत्वा धोवन्ति तत शुद्ध, अथ भूमौ भिन्न तर्हि भूमि खनित्वा न त्यज्यते। इतरथेति तत्रस्थे षष्टिर्हस्ता तिस्रश्च पौरुष्य परिह्रियन्ते, अस्वाध्यायिकस्य प्रमाणमिति—किं बिन्दुमात्रपरिमाणेन हीनेनाधिकतरेण वाऽस्वाध्यायो भवति ?, पृच्छा, उच्यते, मक्षिकाया पादो यत्र न ब्रूडते तदस्वाध्यायिकप्रमाण। इदानीं प्रसूतेति, तत्र।

अजराउ तिन्निपोरिसि जराउआणं जरे पडे तिन्नि। रायपह विंदु पडिए कप्पइ वूढे पुणऽन्नत्थ ॥ २२० ॥ (भा०)

व्याख्या—जरुं जेसिं न भवति तेसिं पसूयाणं वग्गुलिमाइयाणं, तासिं पसूइकालाओ आरब्भ तिण्णि पोरुसीओ असज्झाओ मुत्तुमहोरत्तं छेदं, आसन्नपसूयाएवि अहोरत्तछेदेण सुज्झइ, गोमादिजराउजाणं पुण जाव जरुं लंबइ ताव असज्झाइयं 'जरे पडिए'त्ति जाहे जरुं पडियं भवइ ताहे ताओ पडणकालाओ आरब्भ तिन्नि पहरा परिहरिज्जंति। 'रायपह वूढ सुद्धे'त्ति अस्या व्याख्या—'रायपह विंदु' पच्छद्धं साहुवसही आसण्णेण गच्छमाणस्स तिरियस्स जदि रुहिरविंदु गलिया ते जइ रायपहंतरिया तो सुद्धा, अह रायपहे चेव विंदू पडिओ तहावि सज्झाओ कप्पतित्तिकाउं, अह अण्णपहे अण्णत्थ वा पडियं तो जइ उदगवुड्ढवाहेण हियं तो सुद्धो, 'पुणो'त्ति विशेषार्थप्रतिपादकः, पलीवणगेण वा दड्ढे सुज्झइत्ति गाथार्थः ॥ २२० ॥ मूल गाथायां 'परवयणं साणमादीणि'त्ति परोत्ति चोयगो तस्स वयणं जइ साणो पोग्गलं समुद्दिसित्ता जाव साहुवसहीसमीवे चिट्ठइ ताव असज्झाइयं, आदिसद्दाओ मंजारादी। आचार्य आह—

[1] जरायुर्येषा न भवति तेषां प्रसूताना वल्गुल्यादीनां, तासा प्रसूतिकालात् आरभ्य तिस्र पौरुषीरस्वाध्याय, मुक्त्वाऽहोरात्रच्छेद—आसन्नप्रसूतानामपि अहोरात्रच्छेदेन शुध्यति, गवादीना जरायुजाना पुनर्यावत् जरायुर्लम्बते तावदस्वाध्यायिक जरायो पतिते इति यदा जरायु पतितो भवति तदा तस्मात् पतनकालात् आरभ्य त्रय प्रहरा परिह्रियन्ते। राजपथव्यूढे शुद्धमिति राजपथे बिन्दव। पश्चार्धं। साधुवसतेरासन्नेन गच्छतस्तिरश्चो यदि रुधिरबिन्दवो गलितास्ते यदि राजपथान्तरितास्तर्हि शुद्धा अथ राजपथ एव बिन्दु पतित तथापि स्वाध्याय कल्पते इतिकृत्वा, अथान्यपथेऽन्यत्र वा पतित तर्हि यद्युदकवेगेन व्यूढ तर्हि शुद्ध, प्रदीपनकेन वा दग्धे शुध्यतीति। पर इति नोदक तस्य वचन यदि श्वा पुद्गल भुक्त्वा यावत् साधुवसतिसमीपे तिष्ठति तावदस्वाध्यायिक, आदिशब्दात् मार्जारादय।

जइ फुसइ तहिं तुंडं अहवा लिच्छारिएण संचिक्खे।
इहरा न होइ चोयग! वंतं वा परिणयं जम्हा ॥ २२१ ॥ (भा०)

व्याख्या—[1]साणो भोत्तुं मंसं लिच्छारिएण मुहेण वसहिआसण्णेण गच्छंतो तस्स जइ तोंडं रुहिरेण लित्तं खोडादिसु फुसति तो असज्झाइयं, अहवा लेच्छारियतुंडो वसहिआसन्ने चिट्ठइ तहवि असज्झाइयं, 'इयरह'त्ति आहारिएण चोयग! असज्झाइयं ण भवति, जम्हा तं आहारियं वंतं अवंतं वा आहारपरिणामेण परिणयं, आहारपरिणयं च असज्झाइयं न भवइ, अण्णपरिणामओ, मुत्तपुरीसादिवत्ति गाथार्थः ॥ २२१ ॥ तेरिच्छसारीरय गयं, इयाणिं माणुससरीरं, तत्थ—

माणुस्सयं चउद्धा अट्ठिं मुत्तूण सयमहोरत्तं। परिआवन्नविवन्ने सेसे तियसत्त अट्ठेव ॥ १३५५ ॥

व्याख्या—तं माणुस्ससरीरं असज्झाइयं चउविहं चम्मं मंसं रुहिरं अट्ठियं च, (तत्थ अट्ठियं) मोत्तुं सेसस्स तिविहस्स इमो परिहारो—खेत्तओ हत्थसयं, कालओ अहोरत्तं, जं पुण सरीराओ चेव वणादिसु आगच्छइ परियावण्णं विवण्णं वा

[1] श्वा भुक्त्वा मांस लिप्तेन मुखेन वसत्यासन्नेन गच्छन् (स्यात्), तस्य मुखं यदि रुधिरेण लिप्त स्तम्भकोणादिषु स्पृशति तदाऽस्वाध्यायिक, अथवा लिप्तमुखो वसत्यासन्ने तिष्ठति तथापि अस्वाध्याय, इतरथेति आहारितेन चोदक! अस्वाध्यायिक न भवति, यस्मात् तदाहारित वान्तमवान्त वाऽऽहारपरिणामेन परिणत, आहारपरिणामपरिणत चास्वाध्यायिक न भवति, अन्यपरिणामात्, मूत्रपुरीषादिवत्। तैरश्च शारीर गत, इदानीं मानुषशरीर, तत्र—तत् मानुषशारीरमस्वाध्यायिक चतुर्विध—चर्म मांस रुधिर अस्थि च, तत्रास्थि मुक्त्वा शेषस्य त्रिविधस्याय परिहार—क्षेत्रतो हस्तशतं कालतोऽहोरात्र, यत् पुन शरीरादेव व्रणादिभ्यागच्छति पर्यापन्न विवर्णं वा

